


॥ श्रीः ॥

श्री शठारिमुनिविरचितस्य

द्राविड-(तिरुवाय्मोऴि)-दिव्यप्रबन्धस्य

परिवृत्तिरूपा

# ॥ सहस्रगाथा-रत्नावळी ॥

॥ श्री कल्किसिंह–भगवद्भिरचिता ॥

(प्रथमभागः)

श्रीः

# ॥ अभिनन्दनपत्र-संग्रहः ॥

(EXTRACTS FROM TESTIMONIALS.)

---

I. **His Holiness Sri Totadri (Vanamamalai) Swami.**

(श्री. उ. प. हं- तोताद्रि वानमामलै-स्वामिनः)

" आकर्ण्य पठिता दिव्यां रम्यां च भवतां कृतिम् ।
परमानन्दसन्दोहं प्राप्तास्सानुचरा वयम् ॥ "

" ये तु द्राविडवाङ्मयाभ्यसनतो दूरे स्थिताः पण्डिताः
श्रीमद्भारतमण्डलेऽत्र बहवो भक्ता उदग्देशगाः ।
धन्यास्तेऽपि भवन्ति हन्त महितां साहस्रगाथावळीं
गैर्वाणीं भवतां कृतिं हृदि शुभां सन्धार्य रत्नावळीम् ॥

II. **H. H. Sri Parakala Swami, Mysore—(substance rendered into Sanskrit.)** ( श्री. उ. प. हं-परकालस्वामिनः-)

" पुस्तकमिदमवलोक्य तत्रत्यान् विषयान् परिशील्य च श्री-स्वामिनां सन्तुष्टमन्तरङ्गम् । अपूर्वमीदृशं पुस्तकं केवल-संस्कृतज्ञानां कार्णाटिकानां च महोपकारकं भवती स्वामिनामाशयः ॥ "

III. **H. H. Sri U. Ayodhya Ramanuja Jiyar Swami** ... **budur.)**—श्री. उ. प. हं—अयोध्या रामान...

"सहस्रगाथारत्नावळी गजेन्द्...



॥ श्रीः ॥

श्रीपरांकुशपरकालयतिवरेभ्यो नमः ।

श्रीमद्वरवरमुनये नमः ।

श्रीवादिभीकर महागुरवे नमः ।

# ॥ सहस्रगाथारत्नावळी ॥

( श्रीशठारिमुनिविरचितस्य द्राविडदिव्यप्रबन्धस्य

**तिरुवाय्मोळियायिरम्**

इत्यस्य संस्कृतपद्यात्मक-परिवृत्तिरूपा । )

[ अवतारिका । ]

श्रीमानहं नरहरिर्हरिरप्रमेयो विष्णुः कृपानिधिरिमां रचयामि दिव्याम् ।
धार्यां शठारिमुनिवर्य-**सहस्रगाथा**-रत्नावळीं हृदि सदा मम भक्तवर्गैः॥

श्रीकल्किसिंहकविराड्रचयामि दिव्यां
रत्नावळीं शुभतमां गुणरत्नगण्याम् ।
विष्णोः प्रियां मम सदाऽपि रमापतेश्श्री-
यद्वद्रिनाथ इह भक्तहृदेकभूषाम् ॥

श्रीमान् कल्किनृसिंहार्यः प्रतिवादिभयङ्करः ।
श्रीभक्तपुरनाथोऽहं कुर्वे रत्नावळीमिमाम् ॥

शठारेर्मुख्यतात्पर्यं वक्तुं गीर्वाणभाषया ।
मम कल्किनृसिंहस्य सेयं रत्नावळी शुभा ॥

अत्र प्रतिपदार्थस्तु नैव विद्येत हि क्रमात् ।
भावापोद्धाषतश्चापि मुख्यतात्पर्यमुच्यते ॥

सत्यं दशकतात्पर्यं वक्तुं रत्नावळी कृता ।
वेदान्तदेशिकेनापि पूर्वमेव हि संग्रहात् ॥
सौम्यजामातृयोगीन्द्रोऽप्यतानीद्वादिकेसरी ।
दशकार्थप्रकाशाय द्रविडागमसङ्गतिम् ॥
शठारेः पद्यमालानां क्रमेणार्थप्रकाशनम् ।
क्रियते कल्किसिंहेन मयाऽद्य परमात्मना ॥

अत्र शृङ्गाररसरस्यं भावानां हि विशेषतः
प्रकाशते प्रबन्धे मे शठारिहृदयङ्गमे ॥
शठारेरान्तरं भावं वक्तुं शक्तो न हीतरः
नायकोऽहं परं वेद्मि नायिकाया हृदन्तरम् ॥
अन्तरात्माऽस्मि लोकानां कल्किसिंहः परात्परः ।
सर्वलोकाश्च मे सन्तु नायिकाश्श्रीशठारिवत् ॥
भावानामपि गाम्भीर्यं शैलीलालित्यमद्भुतम् ।
अत्रैव हि प्रकाशेते नान्यत्रेत्येव निश्चयः ॥

अवताररहस्यं मे न जानन्ति विपश्चितः ।
दोषज्ञा एव ते प्रायो न गुणज्ञा हरेर्मम ॥
सर्ववेदान्तसारार्थाः प्रबन्धेऽस्मिन् प्रकाशिताः ।
इति वेद्मि श्रियःकान्तो गीताचार्योऽद्य कल्किराट् ॥
मुक्तये सर्वलोकानां जातिलिङ्गाद्यभेदतः ।
निर्हेतुककृपासिन्धुर्बन्धुस्सर्वविधोऽस्म्यहम् ॥
षोडशस्त्रीसहस्रेशः पुरा गोपीविटोऽभवम् ।
अद्यास्मि सर्वलोकानां पतिर्मोक्षप्रदो हरिः ॥
मम श्रीकल्किसिंहस्य स्वातन्त्र्यं विद्यते हरेः ।
लोका निन्दन्तु वा नन्दन्त्वत्र शैलीं विलोक्य मे ॥





अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
तथाऽपि जगतां मोढ्यं हन्मि सत्यं वदन् हरिः ॥

---

## [ दिव्यप्रबन्धारम्भेऽनुसन्धेयस्तुतिपद्यावली । ]

श्रीशैलेशदयापात्रं धीभक्त्यादिगुणार्णवम् ।
यतीन्द्रप्रवणं वन्दे रम्यजामातरं मुनिम् ॥
लक्ष्मीनाथसमारम्भां नाथयामुनमध्यमाम् ।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम् ॥

यो नित्यमच्युतपदाम्बुजयुग्मरुक्म-व्यामोहतस्तदितराणि तृणाय मेने ।
अस्मद्गुरोर्भगवतोऽस्य दयैकसिन्धोरामानुजस्य चरणौ शरणं प्रपद्ये ॥
माता पिता युवतयस्तनया विभूतिस्सर्वं यदेव नियमेन मदन्वयानाम् ।
आद्यस्य नः कुलपतेर्वकुळाभिरामं श्रीमत्तदङ्घ्रियुगळं प्रणमामि मूर्ध्ना ॥
भूतं सरश्च महदाह्वय-भट्टनाथ-श्रीभक्तिसार-कुलशेखर-योगिवाहान् ।
भक्ताङ्घ्रिरेणु परकालयतीन्द्रमिश्रान् श्रीमत्पराङ्कुशमुनिं प्रणतोऽस्मिनित्यम् ॥

—:o:—

भक्तामृतं विश्वजनानुमोदनं सर्वार्थदं श्रीशठकोपवाङ्मयम् ।
सहस्रशाखोपनिषत्समागमं नमाम्यहं द्राविडवेदसागरम् ॥

**तिरुवळुदिनाडेन्नुम्**—

संस्मृत्य तं **वळुदिनाडि**तिनामधेयं
देशं च तत्र कुरुकानगरीं च रम्याम् ।
भोग्यां च दिव्यसरितं स्मर मानस ! त्वं
पादाम्बुजं द्रविडवेदकवेश्शठारेः ॥

**मनत्तालुम् वायालुम्—**

भक्तोत्तमास्तु मनसा वचसापि नित्यं
शंसन्ति येऽत्र कुरुकानगरीं सुरम्याम् ।
नैतान् विनाऽन्यभजनं करवाणि धन्य-
स्सत्यं शठारिचरणौ शरणं सदा नः ॥

**एयून्द पेरुङ्कीर्ति—**

वन्दे प्रफुल्लपदपङ्कजमद्य दिव्यं रामानुजस्य महितस्य मुनेस्सुसेव्यम् ।
प्राप्तुं मनस्स्थिरमिह द्रविडागमेऽस्मिन् रम्ये शठारिसुकवेर्निरवद्यधाम्नः ॥

**वान् तिहलुम् शोलै—**

उत्तुङ्गवृक्षवलये नगरे च रम्ये श्रीरङ्गभर्तुरिह दिव्ययशःप्रशंसाम् ।
तां द्राविडश्रुतिमयीं तनयां शठारिः प्रासूत चादिजननी यतिराट् च धात्री ॥

**मिक्कविरै निलैयुम्—**

सर्वेश्वरस्य महितस्य महास्वरूपं ! जीवस्य चाव्ययमिदं सदुपायरूपम् ।
पूर्वं च दुष्कृतमहो! प्रतिबन्धरूपं! मोक्षं च वक्ति निगमः कुरुकेशगीतः॥

———:o:———

श्रीमते शठकोपाय नमः ।

# ॥ सहस्रगाथारत्नावली ॥

**प्रथमशतके—प्रथमदशकम् ( उयर्वर उयर्नलम् ),**

( अस्मिन् दशके श्रीशठारिर्भगवतः कल्याणगुणान्
परत्वादिमाहात्म्यं च प्रतिपादयति । )



**१. उयर्वर उयर्नलम्—**

श्रीमानस्त्यप्रमेयो निरतिशयमहानन्दमूर्तिः प्रभावा-
दज्ञानध्वान्तभानुर्मतिविनतिकरो नित्यसूरीन्द्रसेव्यः ।
ज्योतिस्तत्त्वं परं तत्सकलजनिजुषां सर्वसन्तापहारि
श्रीशस्यास्यैव पादाम्बुजयुगळमहो! मानस! त्वं भजेथाः ॥

**२. मननकमलमर—**

मालिन्यं मनसः प्रहृत्य सकलं नित्यप्रबुद्धोज्ज्वला-
द्योगध्यानबलात् प्रमातुमपि यश्शक्यो न चान्येन्द्रियैः ।
एवं यश्चिदचिद्विलक्षणतया भाति त्रिकालेष्वपि
ज्ञानानन्दनिधिस्समाधिकदरिद्रोऽयं किलात्मा मम ॥

**३. इलनदुवुडैयनिदु—**

तस्यायं प्रभुरस्ति नास्य तु किलेत्येवं न वक्तुं स्वयं
शक्यो यः पृथिवीतले च गगने यद्रूप्यरूप्यस्ति च ।
तत्सर्वं च जडाजडं वहति यस्संयुक्त एवाखिलै-
स्सत्यं भाति पृथक्च, विष्णुममितानन्दं तमेकं नुमः ॥

**४. नामवनिवनुवन्—**

सर्वं भाति स एव यद्वयमसावेषोऽप्ययं सा स्वयं
चैषेयं किल काऽपि च स्वयममी तेऽपीति चैते तथा।

तच्चेदं यददश्च किञ्च सकलं यक्षश्वराण्यप्यहो ।
तानीमानि तथाऽप्यमूनि सदसद्वस्तूनि भाव्यागतम् ॥

**५. अवरवर् तमतमदु—**

ते ते स्वस्वमतिस्वभावमनुसृत्यैवेष्टदेवानुगाः
नानासाधनसंयुताः किल तथा देवाश्च तेऽपीश्वराः।
तेषामीश्वर एव सर्वजगतामन्तर्नियन्ता स्वयं
विष्णुर्भाति फलप्रदोऽत्र सततं कर्मानुसारेण च ॥

**६. निन्रनरिरुन्दनर्—**

तिष्ठन्तोऽप्युपवेशिनोऽपि शयिताः सञ्चारशीलाश्च ते
नोतिष्ठन्ति च नोपवेशिन इमे सुप्ता न सञ्चारिणः ।
एवं नैकविधस्वभावसहितास्सर्वेश्वरो भात्यहो ।
नित्यं चैकविधस्वभाव इति यत्सत्यं प्रमाणैस्स्थिरैः ॥

**७. तिडविशुम्बेरिवळि—**

आकाशाग्न्यनिलोदकावनितलेष्वेतेषु विस्तारिणां
वस्तूनां च दृढस्वरूपमखिलं प्राप्यापि चान्तस्स्थितः ।
आत्मा तेषु च वस्तुषु स्वयमयं गुप्तोऽभितस्सर्वग-
स्सर्वाण्यत्ति च देव एव हि परं ज्योतिश्श्रुतिश्लाघितः ॥

**८. शुररिवरुनिलै—**

ब्रह्माद्यैरपि नैव वेद्यमिति यन्मूलं परं सर्वत-
श्चाकाशादिपदार्थजातमखिलं चाश्नन् पराणां परः ।
दग्ध्वा चापि पुरत्रयं सुरगणानुद्बोधयन् यश्शिवो
ब्रह्मा वेति विभाति विश्वमयमेवाश्नन्निहोत्पादयन् ॥

**९. उळनेनिलुळन्—**

अस्तीत्येव वदेद्यदि स्वयमयं नास्तीति चेदप्यहो !
भाति श्रीपतिरस्य रूपमखिलं विश्वात्मकं रूपधृत् ।



यच्चारूपमिदं च तस्य हि हरेश्चारूपमंशात्मकं
सत्त्वासत्त्वयुतं स्वयं द्विविधमप्याविश्य भात्यव्ययः ॥

**१०. परन्द तण् परवैयुळ्—**

सर्वत्रायतशीतवारिधिकणेष्वाविश्य चाणुत्वत-
स्सर्वं चापि महाण्डमण्डलमयं त्वाक्रम्य भूम्ना स्वयम् ।
एवं भूमितले च भाति नभसि व्याप्य स्थितस्सर्वतो
भास्वद्वस्तुषु गुप्त एव हि हरिस्संहारकर्ताऽप्यसौ ॥

**११. करविशुम्पेरिवळि—**

सूक्ष्माकाशतलानलानिलजलावन्यात्मकास्तद्गुणा-
श्श्लाघ्याश्शब्दस्पर्शतापशक्तिधरताशैत्यानि चाधारता ।
एवं सर्वविधात्मकस्य परमस्यास्यैव पादाम्बुजे
साहस्रे दशकं शठारिरचिते चैतत्स्वभक्त्याऽर्पितम् ॥

———(o)———

## अथ प्रथमशतके

### द्वितीयदशकम् [वीडुमिन् मुत्तवुम्]

( भगवति सर्वैः प्रपत्तिः कर्तव्येत्युच्यते । )

**१. वीडुमिन् मुत्तवुम्—**

अन्यत्सर्वं परित्यज्य श्रीशे मोक्षप्रदे हरौ ।
समर्पयत चात्मानं यूयं सर्वे मुमुक्षवः ॥

**२. मिन्निन्निलैयिल—**

नित्यस्याप्यात्मनो देहास्तदितोऽप्यतिनश्वराः ।
अत एव स्वयं यूयं नित्यं स्मरत माधवम् ॥

**३. नीर् नुमदु—**

अहं ममेति सर्वं च प्रहत्यैव समूलकम् ।
भजध्वं स्वामिनं विष्णुं ! नात्मनः पूर्तिरीदृशी ॥

४. इल्लदुमुल्लदुम्—
तस्य रूपं न सन्नासदप्रमेयसुखात्मकम् ।
तस्माद्विषयसम्बन्धं परित्यज्य भजाद्य तम् ॥

५. अत्तदु पत्तेनिल्—
त्यक्ते विषयसम्बन्धे मुक्तिस्स्वात्मानुभूतये ।
मुक्तिं तां च परित्यज्य कैङ्कर्यार्थं भजाच्युतम् ॥

६. पत्तिलनीशनुम्—
नाथोऽपि सर्वलोकानां निस्सङ्गो भाति माधवः ।
एकरूपोऽस्ति सर्वत्र ! निस्सङ्गस्तं भजानिशम् ॥

७. अडंगेलिल् सम्पत्तु—
ऐश्वर्यं सर्वमालोक्य रम्यं तस्य विभूतिगम् ।
ईशस्येत्येव मत्वा त्वं तत्र चैकीभवानिशम् ॥

८. उळ्ळमुरै शेयल्—
मनोवाक्कायरूपं च सार्थकं करणत्रयम् ।
मत्वा त्वं भव निस्सङ्गस्सक्तस्सर्वेश्वरे भव ॥

९. ओडुंगववन् कण्—
आश्रिते च त्वया तस्मिन्नश्यन्ति प्रतिबन्धकाः ।
शरीरत्यागकालन्तु प्रतीक्षस्व ततः परम् ॥

१०. एण् पेरुक्कन्नलत्तु—
अमितानन्द–सद्वस्तु–कल्याणगुणवारिधेः ।
श्रीमन्नारायणस्यैव पादाब्जं दृढमाश्रय ॥

११. शेर्न्दत्तेन् कुरुकूर्—
रम्ये तटाकभूयिष्ठे कुरुकानगरे प्रभोः ।
शठकोपस्य दिव्योक्तिसाहस्रे दशकं त्विदम् ॥

---



## अथ प्रथमशतके

३. तृतीयदशकम् [पत्तुडैयडियवर्क्कु]

(सर्वेश्वरं भगवन्तं नीचतमश्चेतनः कथं प्राप्नुयादिति स्वय माशङ्क्य स्वभक्तानां विषये भगवतस्सौलभ्यकाष्ठां प्रतिपादयति ।)

१. पत्तुडैयडियवर्क्कु—
भक्तानां सुलभोऽस्ति दुर्लभतमस्त्वन्यात्मनामद्भुत-
श्श्रीकान्तः परमः प्रभुश्च किल नः प्राप्यो न चान्यैरसौ ।
मन्थोद्यन्नवनीतचौर्यविधया चोलूखले बन्धभा-
ग्वक्षःपार्श्वतले, भयाद्विलपतस्सौलभ्यकाष्ठाऽस्य का ? ॥

२. एळिवरुमियल्विनन्—
नानाजन्मसु च स्वयं किल विशन्नैयत्यहीनोऽस्थिरः
कल्याणाम्बुधिरप्यनादिनिधनः प्रत्यक्षतेजोनिधिः ।
मोक्षज्ञानफलप्रदश्च सततं साकल्यतश्चेश्वरो
लोकानामुपकारकोऽस्ति दयया स्वीयोऽपि बाह्योऽस्त्यसौ ॥

३. अमैवुडैयरनेरि—
पूर्णं धर्ममवाप्तुमुत्तमगतिं प्राप्ताश्च सर्गं लयं
कर्तुं च प्रभवोऽमरास्तदितरे ये चेतनाचेतनाः ।
ते सर्वेऽपि स एव भाति भगवान्नारायणश्श्रीधरः
पूर्णस्सिद्ध इहास्य जन्मचरिते मायान्तु को वेत्ति वा ? ॥

४. यारुमोर्निलैमैयन्—
नाथोऽयं मम नामरूपशतसाहस्रावळीभृत्स्वयं
भात्येकस्सुविलक्षणस्त्विति विदुर्नैवं बुधा नास्तिकाः ।
जानन्त्येव किलास्तिकास्तु तमिमं विद्याविहीना अहो !
रूपं नाम च नास्य भाति किल भातीत्येव वादो महान् ॥

५. पिणक्करवरुवकै—

एवं षट्समयैश्च वादसरणिर्नश्येदिति श्रीधरो
वेदान्तार्थसुधारसं हि भगवान् कल्याणशीलोऽब्रवीत् ।
आदिश्रान्तविवर्जितः किल हरिस्तद्भक्तिमार्गं शुभं
प्राप्यानन्यपरायणाश्च भवत प्रध्वस्तकर्माशयाः ॥

६. उणर्न्दुणर्न्दु—

ज्ञातृत्वात्सततं च चिन्तनपरास्सर्वासुदिक्षु स्वयं
ज्ञानस्य प्रसरं विरच्य च जडाद्व्यावृत्तिमेतां निजाम् ।
निश्चित्य श्रवणात्पुनश्च मननाद्योगाच्च मध्यस्थितिं
विष्णोर्वित्थ जनाश्चिमूर्तिषु हृदा वाचा भजध्वं परम् ॥

७. ओन्नुनप्पलवेन—

एकानेकतयाऽपि संशयकरान् नारायणं तं चतु-
र्वक्त्रं रुद्रमिमान् विचिन्त्य बहुधा यूयं हृदि श्रीधरम् ।
तं प्राप्तुं सहसाऽप्यनन्यहृदया नारायणं स्वामिनं
यावच्चायुरिदं न नश्यति तदा भक्तिं कुरुध्वं पराम् ॥

८. वालु निन्नडु नमपळमै—

चेतोदोषहरा वयं यदि हरेश्श्रीशस्य पादद्वयं
श्राधास्सन्ततताप‌कारिदुरिताबळ्यास्तु नाशो भवेत् ।
इष्टार्थेषु न रिक्तता किल भवेत् ! कायस्य विश्लेषतो
निर्याणेऽन्तिमकालतोऽपि भजनं विष्णोर्भवेत्सार्थकम् ॥

९. वलत्तनन् तिरिपुरमेरित्तवन्—

ब्रह्मा चापि चतुर्मुखस्स्वजगता नाभीपुटे वर्तते
रुद्रश्च त्रिपुरान्तकः किल हरेः पार्श्वं श्रितो दक्षिणम् ।
प्रत्यक्षोऽपि भवेन्निजे तु जगति स्वस्यावतारादसौ ।
यद्युच्येत हरेः प्रभावजलधिर्भूयानगाधोऽद्भुतः ॥



१०. तुयररुमतियिल् नन्नानत्तुळ्

दिव्यज्ञानयुतान् सुरानपि च यस्सम्मोहयत्यञ्जसा
मायाभिर्दिवि चासिताम्बुदनिभस्त्रैलोक्यमानप्रभुः ।
तस्यैवाङ्घ्रिसरोजयुग्ममनिशं भक्त्या स्मरन् कीर्तयन्
संश्लिष्यापि नमेयमित्यहह! मे वाञ्छा स्वयं वर्धते ॥

११. अमरर्कळ् तोळुदेळ—

देवानामपि सेव्यमच्युतमिमं पाथोधिमन्थप्रभुं
स्तोतुं श्रीहरिमेव दिव्यकुरुकापुर्यां शठारिर्मुनिः ।
कैङ्कर्यं किल वाचिकं व्यतनुत श्रीसूक्तिसाहस्रत-
स्तत्रेदं दशकं तनोति पठतां मुक्तिं च सूरीन्द्रताम् ॥

—:o:—

## प्रथमशतके

### ४. चतुर्थदशकम् ( अञ्जिरैय मडनाराय्– )

(अत्र श्रीशठारिर्भगवतो नायिका स्वयमिति मत्वा तदीयं क्षमागुणं परिशील्य पक्षिगणद्वारा स्वसन्देशान् प्रेषयति ।)

१. अञ्जिरैय मडनाराय्—

नित्यं चोपकृतिप्रसक्तहृदया त्वं हे ! बलाकाह्वये![1]
मत्ता नायकसङ्गमात्किल कृपां त्वं हन्त ! कृत्वा मयि ।
दूतीभूय सनायकाऽद्य गरुडारूढं प्रभुं याहि मे
बन्धे तत्र धृताऽसि चेन्न हि भयं, साह्यन्तु मे त्वं कुरु ॥

२. एन्नशेय्द तामरैक्कण् पेरुमानार्क्कु—

यूयं वाग्मिन एव कोकिलगणा दूता भवन्तो मम
श्रीकान्तं प्रभुमम्बुजाक्षमुचितामुक्तिं वदेतैव चेत् ।

(१) बलाका—नारै ।

हानिः का मम पापतो यदि पुरा तत्पादसेवामहं
न प्राप्तं किमिहाधुनाऽपि च तथा विश्लेषवान् दुर्विधेः? ॥

३. विदियिनाल् पेडैमणक्कुम्—

कान्तासङ्गमभाग्यवैभवयुता हंसाः स्वयं मन्दगा
यूयं वामनमेव वञ्चकममुं दृष्ट्वा मदीयां दशाम् ।
ब्रूत–स्त्री किल का चिदद्य दुरितं किं मे महद्दुस्सहं
हा ! हा ! हन्त ! न नश्यतीति नितरां चित्तेऽस्ति सम्मोहिता॥

४. एन्नीमैं कण्डिरङ्गि—

विश्लेषासहतां विलोक्य च मम स्वैरं कृपावानसौ
नासीत्किं मयि नीलमेघसुतनुश्चेत्येव वाचं मम ।
यूयं केचन पक्षिणोऽद्य मम सद्भावोऽपि तस्मिन् विभौ
कान्ते नैव हि तिष्ठतीति वचनं ब्रूथैव वा? नैव वा? ॥

५. नल्कित्तान् कात्तलिक्कुम्—

रक्षित्वा स्वयमेव सप्त भुवनान्यास्ते जगन्नायकः
किं मह्यं वत नैव भाति कृपया नारायणः पापतः ।
दृष्ट्वा तं वद सुन्दराकृतिधरे! क्षेत्रेषु सञ्चारिणि
प्रीत्या त्वं कुरुकाख्यपक्षिणि वचः किञ्चित्सबाष्पान्तु माम् ॥

६. अरुळाद नीररुळि—

रम्यस्वोचितपत्रझंकृतियुतस्त्वं भृङ्ग! दृष्ट्वा हरिं
नाथं भक्तकृपाळुचक्रधरमेवेदं वचो मे वद ।
निष्कारुण्यगुणोऽसि जातु कृपया तस्यास्तु जीवावधौ
तद्वीथ्यां गरुडं च ते गमय भो! देवेति, किं मेऽस्त्यघम्? ॥

७. एन् पिळै कोप्पदुपोल—

मत्संवर्धित! हे शुक ! त्वमधुना श्रीकान्तमेवं वद
क्लेशो मेऽस्ति हि दुस्सहोऽयमधुना! बाष्पार्द्रवक्त्राऽस्म्यहम् ।

(१) केचन पक्षिणः–– मकन्रिल्कळ् ।



आगांस्येव मम स्मरेत्किमु हरिः? कारुण्यसिन्धुर्न किं?
किं तादृङ्मम वर्धतेऽद्य दुरितं? पात्रं दयाया न किम्? ॥

८. नीयलैये शिरुपूवाय्—

दूतीभूय मम त्वमद्य पतंग! प्राप्तो न तं मूढधी-
र्विष्णुं मे प्रभुमिन्दिरेशमनघं नावेदयो मे दशाम् ।
अत्यन्तार्तिकरीमिमां किल! ततो वर्णोऽद्य देहे मम
क्षीणोऽस्त्यन्तिमकाल एवमितरांस्त्वं पोषकान्मार्गय ॥

९. नाडाद् मलर् नाडि —

मध्ये सञ्चरसि त्वमद्य सहसा गत्वाऽद्य भो मारुते !
श्रीशं तं वद किञ्चिदेव वचनं नारायणं मे प्रभुम् ।
तत्पादाब्जयुगे प्रसूनरचने भाग्यं न मे पाप्मतो!
विश्लेषेऽत्र विषण्णताऽस्ति हि ततस्त्वं मे वपुर्नाशय ॥

१०. उडलाळि पिरप्पु वीडुयिर्—

भो भो! मानस! मे गभीर! बहुधा संसारचक्रस्य वै
मोक्षस्यात्मगणस्य भोग्यकरणावल्याश्च निर्वाहकम् ।
तं क्षीरार्णवशायिनं यदि हरिं पश्येस्स्वयं चक्रिणं
त्वं ब्रूह्यद्य दशां मम प्रियसमागत्यै च! मां मा त्यज ॥

११. अलवियन्र वेळुलकत्तवर्—

उत्तुङ्गामितसप्तलोकसरणेर्नाथं च कृष्णं हरिं
दिव्यज्ञानबलाद्भजन् हि कुरुकापुर्याश्शठारिः प्रभुः ।
साहस्रं व्यतनोच्च वृत्तरचनैरन्तादिपद्यावळीं
तत्रेदं दशकं तु भक्तपठितं दिव्यं पदं प्रापयेत् ॥

:o:

(१) पूवै –पक्षिविशेष ।

## प्रथमशतके

५. पञ्चमदशकम् ( वळवेंळुलकिन्मुदलाय- )

(ईश्वरस्स्वसौशील्यात्—शठारिविश्लेषमसहमानस्तं स्वसन्निधिं प्रापयतिस्मेति वदति ।)

१. वळवेळुलकिन्मुदलाय—

मूलं सप्तजगत्ततेश्च मनसा सूरीन्द्रनाथं स्मरन्
देहेऽहं शिथिलेन्द्रियश्च वचसा पापी वदाम्येव हि ।
धूर्त त्वं नवनीतचोर इति च स्मेराननां तां प्रियां
नीळां प्राप्तुमहो वृषानपि विभो सप्तावधीश्चेत्यपि ॥

२. निनैन्दु नैन्दुळ् करैन्दुरुकि—

देवास्ते मुनयोऽपि हन्त बहवस्सर्वे स्वयं चेतसा
स्मृत्वा त्वद्गुणसन्ततिं शिथिलितस्वाङ्गा द्रवीभूय च ।
मालातीर्थसुगन्धधूपसहितास्त्वां चेन्नमन्त्यच्युतं;
मायिन्! सर्वपदार्थमूल! मलिनं किं स्यान्न ते वैभवम्? ॥

३. मायोनिकळाय् नडैकच—

देवादींश्च मुनीन् बहूनपि सृज त्वं सर्वजन्तूनपी
त्येवं तं चतुराननं प्रथमतस्स्पृष्ट्वाऽप्यगम्यो मतः ।
लोकानप्यखिलान् स्वपादतलतस्स्पृष्ट्वा स्वयं मातृव-
द्वात्सल्याम्बुधिरेव सर्वजगतामत्यद्भुतस्वाकृतिः ॥

४. तानोरुरुवे तनिवित्ताय्—

मूलं सर्वजगत्ततेरपि हरिर्यस्त्वेकमूर्तिः प्रभु-
स्सङ्कल्पाद्बहुधा भवन् विजयते देवाश्च मूर्तित्रयम् ।
एवं ते मुनयोऽपि मानवगणास्तिर्यङ्मुखास्स्थावरा-
स्सर्वं च स्वयमेव चाब्धिशयनो वैकुण्ठराण्मे प्रभुः ॥



५. मानेय्नोक्कि मडवाळै—

लक्ष्मीं तां मृगलोचनां शुभगुणां धृत्वा स्वयं वक्षसि
श्रीमन्! चापमिव स्वयं किल हरे! कुब्जामृजूकृत्य ताम् ।
गोविन्दो मधुसूदनो मणिनिभस्त्वं ज्योतिषां भास्वर-
स्त्वत्पादाब्जयुगं कथं बत! सुधास्यन्दि त्वघी प्राप्नुयाम्? ॥

६. विनैयेन् विनै तीर्मरुन्दानाय्—

पापिष्ठस्य च पापशान्तिविधये दिव्यौषधात्माऽसि भो!
देवानामपि सर्वतः परिवृढस्त्वं केशवोऽसि प्रभो! ।
गोपानां कुलमूलनायक! विभो! मायामयो माधव!
त्वं वै सप्ततरुच्छिदेव बहुधा त्वामाश्रये श्रीधर! ॥




७. अडियन् शिरिय ञानत्तन्—

अल्पज्ञोऽस्मि हि दास एष महतां तं ज्ञानिनां दुर्लभं
श्रीकृष्णं तुलसीस्रगञ्चितमपि श्रीशं भवार्तिच्छिदम् ।
द्रष्टुं हा! बत! कामयेऽद्य मनसा मूढोऽस्मि पापी स्वयं!
किं चेतः परमस्ति मौढ्यमधिकं दृष्टं श्रुतं वा क्वचित्? ॥

८. उण्डायुलकेळ् मुन्नमे—

मायाचेष्टित! पूर्वमेव हि भवान् भुङ्क्ते स्म लोकानिमान्
सप्तापि स्वयमुद्गिरन्नपि पुनर्जातो मनुष्यात्मना ।
एवं किं नवनीतभुक्पुनरभूः? पूर्वोक्तमृद्भक्षणा
च्छेषं किं द्रवयेस्सितत्वहतये दिव्यौषधं किं घृतम्? ॥

९. मायोम् तीय वलवलै—

मायां तामपि पूतनां विषमयीं हन्तुं स्वयं निर्मलो
बालोऽसौ विषमिश्रमप्यमृतवत्स्तन्यं महात्माऽपिबत् ।
देवानामपि देवमेव कमलाकान्तञ्च सर्वात्मनां
वात्सल्याम्बुनिधिं प्रभुं मम विभुं संश्रित्य जीवाम तम् ॥

१०. शार्ङ्ग विरुवल्विनैकलुम्—

पूर्णज्योतिर्मयोऽसौ हरिरिह परितश्चोपरिष्टादधश्च
व्याप्यास्ते चाप्रमेयस्सकलचिदचितामन्तरात्मा परात्मा ।
मन्नाथो द्वन्द्वकर्मप्रतिहतिमुखतो मेऽत्र सङ्गं प्रहृत्य
स्वस्मिंश्चित्तं मदीयं भुवि दिवि च सदा स्थापयन्मां वृणोति ॥

११. माले मायप्पेरुमाने—

सर्वोत्कृष्टोऽसि मायिन्! परमपुरुष! हे माधवेत्येव मुग्ध-
स्तस्येशस्य प्रसादादवहितहृदयश्श्रीशठारिर्महात्मा ।
साहस्रं चाह शस्यं द्रविडबुधवरैर्गानलोलैश्च भक्तै-
स्तत्रेदं रत्नरूपं दशकमपि विदन् वीतदुःखस्सुखी स्यात् ॥

---

## प्रथमशतके

### ६. षष्ठदशकम् (परिवदिलीशनैप्पाडि-)

(ईश्वरस्य कल्याणगुणानीदृशानजानानाश्चेतना नरकं प्राप्नु-
वन्तीति करुणया श्रीशठारिः—'नायं दुराराधस्सर्वेषा
मुज्जीवनाय सुलभः'—इति चेतनान् बोधयति ॥

१. परिवदिलीशनैप्पाडि—

सञ्जाय पूर्णविभवं निरवद्यमीशं
ज्ञानादिपूर्तिमपि चेत्परिलब्धुकामाः ।
यूयं त्वनन्यशरणा भजताद्य बार्थं
धूपं च पुष्पमपि तत्र समर्प्य तीर्थैः ॥

२. मदुवातेण्णन्तुलायान्—

सुस्वादुगन्धतुलसीधरमप्रमेयं
वेदैश्च वेद्यमनघं पुरुषं पुराणम् ।
आराधयामि कथमित्यपि माऽस्तु चिन्ता!
सर्वं करोम्यहमितीह हि दास्यकृत्यम् ॥



३. ईडुमेडुप्पुमिलीशन्—

त्यागे परिग्रहविधौ च नृणां समानं
नैव त्यजेन्मम मनः किल तं प्रभुं मे ।
गानं न हि त्यजति मे रसना च तस्य
प्रेम्णा ममाद्य किल नृत्यति देहयष्टिः ॥

४. अणङ्गेनवाडुमेनङ्गम्—

आविष्टवत्किल वपुर्मम नृत्यतीदं
सम्यक्प्रणम्य मम नाथमयं हि देवैः ।
स्तव्योऽस्ति सूरितिलकैरपि सम्भ्रमेण
श्रीशस्य सद्गुणगणावळिरीदृशी हि ॥

५. कोळ्कै कोळामैयिलादान्—

स्वीकारधिक्कृतिविहीनमरागवैरं
सुस्वादु चेदममृतं किल नित्यभोग्यम् ।
वस्तु प्रयोजनपरानपि चाप्यनन्यान्
सम्यग्विविच्य सुलभं षरभक्तिभाजाम् ॥

६. अमुदममरर्कळ्कीन्द—

यश्चामृतं तु वितरन्नमरान् प्रतुष्टान्
कुर्वन्महोज्ज्वलसुदर्शनभृत्परात्मा ।
कल्लोलवैभवविशालसुधाब्धिशायी
तत्रामृताच्च मधुरान्नितरां हि भोग्यः ॥

७. नील् कडल्शूल्—

विस्तीर्णवारिधिवृतां नगरीं च लङ्कां
शास्तुर्भुजानपि शिरांसि च यश्चकर्त ।

तत्पादपद्मयुगळं शिरसा प्रणम्य
प्रेम्णा स्वयं तरत कालमहाम्बुराशिम् ॥

८. कलिमिन् तोण्डीर्कळ्—

भक्ता अनन्यशरणा भवताद्य यूयं
त्यक्त्वाऽन्यसक्तिममुमेवं हरिं भजध्वम् ।
तस्मादनादिदुरिताविळिविघ्नमालां
हत्वा स एव तनुते परमां गतिं वः ॥

९. तरुमवरुम् पयनाय—

यश्चाद्वितीयविभवः प्रभुरप्रमेयो
विष्णुश्श्रियःपतिरुदारफलप्रदोऽस्ति ।
सत्यं समस्तदुरितानि च युग्मरूपा-
ण्युच्छेदयेत्स्वयमयं प्रतिबन्धकानि ॥

१०. कडिवार् तीयविनैकळ्—

एवं महादुरितवारिधिशोषणं य-
श्श्रीमान् करोति च स एव हरिः परात्मा ।
नित्यं चकास्ति हि महोज्ज्वलताक्ष्र्यकेतु-
श्श्रीदिव्यमङ्गळशुभाश्रयदिव्यमूर्तिः ॥

११. मादवन् पाल् शडकोपन्—

श्रीमाधवस्तुतिपरं किल दोषहीनं
साहस्रमाह शुभमेव शठारिसूरिः ।
तत्रापि दिव्यदशकं तदिदं तु भक्त्या
ये ये पठन्ति ननु ते भवबन्धमुक्ताः ॥

—:o:—



## प्रथमशतके

### ७. सप्तमदशकम् (पिरवित्तुयरर्–)

( स्वाराध्यस्य भगवत आराधनं सुखरूपमिति प्रतिपादयति । )

१. पिरवित्तुयरर—

आत्मावलोकनपरा भवबन्धमुक्त्यै
तेजः प्रभावभरिता अपि धार्मिकाग्र्यम् ।
श्रीचक्रपाणिमनघं परमं पवित्रं
प्राप्यं च हन्त ! ननु साधनमामनन्ति ॥

२. वैप्पाम् मरुन्दामडियरै—

भक्तान्न पापसरणिष्वपि चेन्द्रियाणां
प्रच्यावयेदयमिहाच्युत इन्दिरेशः ।
दिव्यौषधं च निधिरस्ति समस्तलोका-
नानन्दयन् प्रभुरहो मम गोपबालः ॥

३. आयर् कोळुन्दाय्—

गोपालबालमपि गोपवशं निबद्धं
माणिक्यभासमिह मायिसुधारसं मे ।
आपीय सन्ततमहं हृतवान् प्रमोहं
मायाभवं प्रकृतिजं मम दुस्सहं तम् ॥

४. मयर्वरवेन्मनत्ते—

मोहं प्रणाश्य मम यो हृदि नित्यवासी
ज्ञानादिवृद्धिकृदसौ महसां च राशिः ।
देवाधिदेवमपि मेऽनुमतिं दधानं
चेतोहरं मम कथं बत ! सन्त्यजेयम् ?

५. विडुवेनो एन् विळक्कै—

ज्ञानप्रदीपमिह मे हृदि सम्प्रविश्य

सञ्जीवयन्तमपि मे प्रभुमद्भुतैस्तैः ।

वृत्तैश्च हन्त ! तरुणीरपि गोपिकास्ताः

जित्वा विटायितममुं तु कथं त्यजेयम् ॥

६. पिरान् पेरुनिलङ्कीण्डवन्—

स्वामी धरोद्धरणकृत्तुलसीकृतश्री-

मौळिप्रभूषितशिरा मम नायकोऽसौ ॥

मायामयो यदि भवेद्धत ! गन्तुकाम-

स्सालच्छिदं कथमहं तमिहानुमन्ये ? ॥

७. यानोट्टि येन्नुळिरुत्तुवमेन्निलन्—

नाहं स्वयं तमिह मय्यनुमत्य कुर्वे !

सोऽयं स्वयं मम मनोऽपि च वञ्चयित्वा ॥

देहे प्रविश्य मम चात्मनि सङ्गतस्सन्

किं मां च दूरमनुमन्यत एव गन्तुम् ? ॥

८. एन्नै नेकिळिकलुम्—

मां दूरतस्स्वयमसौ यदि सन्त्यजेन्मे

चित्तं तथाऽपि न वियोजयितुं क्षमस्स्यात् ॥

नीळां सुदीर्घशुभवृत्तभुजां प्रहृष्ट-

स्संश्लिष्य भाति यदसौ दिवि सूरिनाथः ॥

९. अमरर् मुळुमुदलाकिय—

सूरीन्द्रनाथमपि चादिविभुं सुराणां

दिव्यामृतप्रदममुं किल गोपबालम् ।

आत्मा मम स्वयमुपेत्य च सम्प्रविश्य

स्वैरं विहृत्य मिळितोऽस्ति ! कथं त्यजेतम् ? ॥



१०. अकलिलकलुर् [illegible]लणुकुम्—

विश्लेषिणं किल वियोजयति स्वयं य-

स्संश्लेषिसङ्गतिरतोऽसुलभोऽस्ति चीरः ।

मन्नायकोऽप्रतिभटस्स्वगुणैरनन्तै-

स्सङ्कीर्त्य तं ननु दिवानिशमस्म्यतृप्तः ॥

११. कुडैन्दु वण्डुण्णुम् तुळाय्मुडियानै—

भृङ्गावृतार्द्रतुलसीधरमौळिदीप्रं

स्तुत्वा शठारिमुनिराह शुभं सहस्रम् ।

तत्रेदमस्ति दशकं शुभमार्तिमालां

सर्वां च हन्ति जगतां सहसैव दिव्यम् ॥

---

## प्रथमशतके

### ८. अष्टमदशकम् (ओडुम् पुळ्ळेरि)

( आर्जवगुणोपेतो भगवानाश्रितसंश्लेषं स्वयमेव करोतीति निरूपयति । )

१. ओडुम् पुळ्ळेरि—

आरुह्य गरुडं भाति दिव्यां च तुलसीं वहन् ।

नित्यसूरिवरैर्नित्यं सेव्योऽस्ति दिवि माधवः ॥

२. अम्मानाय्—

सर्वेश्वरोऽप्यसौ केशिहन्ता कृष्णोऽब्जलोचनः ।

आश्रितार्थं स्वयं जातस्सर्वमाहात्म्यशोभितः ॥

३. कण्णावान्—

देवानामपि मर्त्यानां चक्षुर्यो वेङ्कटाचले ।

सूरीणामपि सेव्योऽसौ भाति रम्ये सुशीतले ॥

४. वेण्णैयोनेडुत्तु—

धृत्वा महाद्रिमप्येष निरायासोऽस्ति वीर्यवान् ।

आपद्बन्धुर्मम स्वामी ! स्मराम्यस्य यशस्सदा ॥

५. वैकलुम् वेण्णेय्—

नवनीतं सदा भुङ्क्ते स्वयं बाहू प्रसार्य यः ।
स मे वपुषि संसक्तो भाति सत्योऽनृतं त्यजन् ॥

६. कलन्देन्नावि—

संश्लिष्य मम चात्मानं कृत्वा स्वीयं मम प्रभुः ।
सर्वेन्द्रियहरो भाति वामनो धरणीं भजन् ॥

७. कोण्डानेळ्विडै—

सप्तर्षभप्रहर्ताऽसौ सप्तलोकीं च भक्षयन् ।
परमे धाम्नि च स्थित्वा मम चित्तानुगः प्रभुः ॥

८. आनानानायन्—

गोपवेषधरोऽप्येष स्वयं मत्स्यवराहवत् ।
अवतीर्णोऽभवन्मह्यमबतारा असङ्कुचकाः ॥

९. शङ्गुशक्करम्—

शङ्खचक्रधरो भाति रम्ये भुजयुगे स्वयम् ।
मम प्रभुरसौ दीप्रस्सर्वत्रोऽप्यवतारतः ॥

१०. नादन् ञालङ्गोळ्—

ईश्वरस्सर्वलोकांश्च पादेनाक्रम्य रक्षिता ।
सुशीलो भाति मन्नाथो वेदसागरकीर्तितः ॥

११. नीर् पुरै वण्णन्—

रक्षितुर्निम्नगान् विष्णोरार्जवं कीर्तयन्मुनिः ।
शठारिराह साहस्रं ! तत्रेदं दशकं शुभम् ॥

———०———



## प्रथमशतके

९. नवमदशकम् ( इवैयुमवैयुमुवैयुम्-)

( अत्र शठारिस्स्वविषये भगवता कृतं सर्वावयवसंश्लेषं वर्णयति । )

१. इवैयुमवैयुमुवैयुम्—

सर्वाचेतनसन्ततिं निकटतोऽदूरेऽपि दूरे स्थिता-
मेवं चेतनसन्ततिं च सकलां स्वस्मिन् विधायापि यः ।
सृष्ट्वा चापि पुनस्स रक्षणपरस्सर्वान्तरात्मा स्वयं
स्वामी कृष्णविभुर्ममामृतरसश्श्रीशोऽस्ति चाग्रे मम ॥

२. शूळल् पलपल वल्लान्—

कुर्वंस्तामवतारसन्ततिमपि स्वेच्छाबलात्प्राक्तने
काले दिव्यवराहमूर्तिरवनीमुद्धृत्य यः केशवः ।
मन्नाथः किल हस्तिशृङ्गभिदसौ देवैरवेद्यस्स्वयं
गंम्भीरामृतवारिधौ महति यश्शेते स पार्श्वेऽस्ति मे ॥

३. अरुकलिलाय पेरुञ्जीर्—

नित्यानन्तसुनिर्मलात्मविभवस्सूरीन्द्रनाथस्स्वयं
चादिर्नीलमणिप्रभस्सुरुचिराम्भोजाक्षियुग्मो हरिः ।
दीव्यत्पक्षगरुत्मदाश्रय इह श्रीदेव्युपेतस्स्वयं
संश्लिष्याद्य मया सहाद्भुतरसं दत्वा न मान्तु त्यजेत् ॥

४. उडनमर् कादल् मकळिर्—

संश्लेषैकरसाश्च यस्य कमला भूमिश्च नीळा स्वयं !
यस्यासीदुदरे जगत्त्रयमपि ! स्वामी शयानोऽम्बुधौ ।
मायी यो वटवृक्षपत्रशयितः कृष्णः प्रभुश्श्रीधर-
स्सोऽयं भाति हि पार्श्वतो मम तनौ नित्यं यशोदासुतः ॥

५. ओक्कलै वैत्तु मुलैप्पाल्—

रुद्रश्चापि चतुर्मुखश्शतमुखस्सर्वेऽपि चोत्पादिता
येनेशम स एव मायिहृदयां तां स्तन्यदां चावधीत् ।

तद्दुर्भावहरो हरिर्विषमयं स्तन्यं निपीय स्वयं
स्वामी चाद्भुतवैभवस्स भगवानास्ते हृदब्जे मम ॥

६. मायनेन्नेञ्जिनुळ्ळान्—

मायी मे हृदयस्थितः किमितरैरेवंविधस्स्यादसौ !
देहे चात्मनि मे शरीर्यनिलवद्व्यात्माऽपि दूरेऽसताम् ।
भक्तानां सुलभश्च दग्धमनसां चिन्ताद्यतीतस्स्वयं
शुद्धस्संशयमोहकृच्च जगतां बाह्वपरिष्ठो मम ॥

७. तोळिणै मेलुम् नन्मार्पिन्मेलुम्—

बाहूनामुपरि प्रियोरसि शुभे मौळिस्थले चोज्ज्वले
पादाम्भोजयुगे च रम्यतुलसीमालाञ्चितश्श्रीधरः ।
स्वामी निस्समवैभवस्स्वमहसा दीप्तस्वमूर्तिस्सदा
संश्लिष्यापि मया सहानवरतं जिह्वां प्रविष्टो मम ॥

८. नाविनुळ् निन्रुमलरुम्—

विद्यास्वप्यखिलासु चात्मतनुरूपोऽयं स्वयं तज्जनि-
ध्वंसादेरपि कारणं च कुसुमावल्या चतुर्बाहुभृत् ।
वैरिध्वंसकचक्रशङ्खभृदसौ नीलोत्पलश्यामलः
पद्माक्षोऽद्य चकास्ति चोज्ज्वलतनो मन्नेत्रयुग्मे हरिः ॥

९. कमलक्कण्णनेन् कण्णिनुळ्ळान्—

पद्माक्षो मम नेत्रगोचरतया भाति स्वयं ! यश्च मां
कृत्वा दिव्यकटाक्षपात्रमपि मे पञ्चेन्द्रियाणां प्रभुः ।
आविर्भाव्य सरोजसम्भवमजं फालाक्षयुक्तं विधिं
देवानप्यमलांश्च लोकसरणिं सृष्ट्वा ललाटेऽस्ति मे ॥

१०. नेत्तियुळ् निनून्नैयाळुम्—

भक्तानां शिरसि प्रयुक्तचरणं मौळौ तुळस्याऽञ्चितं
कृष्णं देवमिमं भजन्ति हि सुरास्सर्वेऽपि भक्त्या स्वयम् ।



रुद्रश्चन्द्रकलाधरोऽपि च चतुर्वक्त्रोऽपि चेन्द्रादयः !
प्रत्यक्षो मम मस्तकेऽद्य नितरां भाति स्वयं तादृशः ॥

११. उच्चियुळ्ळे निर्कुम् देवदेवर्क्कु—

एवं मस्तकसुप्रतिष्ठितमिमं देवाधिदेवं हरिं
कृष्णं प्रेमभरेण शंसितुमयं भक्तश्शठारिर्मुनिः ।
साहस्रं कुरुकेश्वरस्समतनोद्भक्त्या निवेद्य स्वयं
तत्रेदं दशकं वहन्ति शिरसा तत्पादयुग्मं सदा ॥

———0———

## अथ प्रथमंशतके

### १०. दशमदशकम् (पोरुमानीळ्पडै)

( तादृशसंश्लेषहेतुं विचार्य स्वस्याऽकिञ्चनत्वादीश्वरस्य
निर्हेतुकमुपकर्तृत्वं प्रतिपादयति । )

१. पोरुमानीळ्पडै—

दिव्यायुधात्मकसुचक्रसुशङ्खधारी
श्रीमत्पदाम्बुजयुगं जगतां सुसेव्यम् ।
कर्तुं निजं किल विलक्षणवामनात्मा
संवृद्धनीलमणिरस्ति ममाक्षियुग्मे ॥

२. कण्णुळ्ळे निर्कुम् कादन्मैयाल्—

यः पञ्चभूतजगदात्मक एव नाथ-
स्तं प्राप्य भक्तिभरिता यदि सोऽस्ति दृश्यः ।
सञ्चिन्तयन्ति यदि तं स तदाऽपि वश्य-
स्स्याद्भक्तियुक्तमनसां ! किमितोऽस्ति कृत्यम् ! ॥

३. एम्बिरानै—

हे ! भव्य ! मानस ! भजाद्य मम प्रभुं तं
नाथं च मत्पितृपितामहतत्पितॄणाम् ।
पद्माक्षमेव मयि दिव्यकटाक्षयुक्तं
लक्ष्मीञ्च वक्षसि दधानमुदात्तरूपाम् ॥

४. नेञ्जमे नल्लै नल्लै—

सन्मानस ! त्वमिह भासि सुसाधु ! साधु !
त्वां प्राप्य किं न तु भजाम ? किमस्त्यसाध्यम् ? ।
लक्ष्मीपतिं सततयौवनशालिनं तं
देवं भज त्वमनिशं मम यावदायुः ॥

५. कण्डाये नेञ्जे—

हे मानस ! त्वमिह पश्यसि सिद्धिमेतां
मत्कर्मणान्नु परितोऽपि विनैव चिन्ताम् ।
भुक्त्वा च सप्तभुवनानि पदत्रयेण
त्रातारमेव जगतां त्वमपश्य एवम् ॥

६. नीयुम् नानुम्—

हे ! चित्त ! मातृवदसौ पितृवच्च नाथो
लोकेऽपि नीलमणिवर्ण इहावतीर्णः ।
स्वामी ममास्ति हि ! विलोक्य दशां किलैता-
मद्यावयोर्न किल दुःखलवं च कुर्यात् ॥

७. एन्दैये येन्नम्—

यं सूरिवर्यनिवहाः परमं भजन्ते
स्वस्वामिनं स्वपितरं दिवि चिन्तयन्तः ।
तं मानसे मम कथं बत ! पापशील-
स्वस्वामिनं स्वपितरं च वृथाऽत्र मन्ये? ॥



८. शेल्वनारणनेम् शोकेट्टलुम्—

बाष्पावळिर्मम किल प्रवहत्यहो ! श्री-
नारायणेति वचनं तु निशम्य नेत्रात् ।
चित्रं ! कथं न्विदमसौ मयि सादरोऽस्ति
श्रीमान् दिवानिशमतो न निजं त्यजेन्माम् ॥

९. नम्बियै तेन्कुरुङ्गुडिनिन्—

श्रीमत्कुरङ्गनगरस्थितमच्युतं तं
सम्पूर्णवैभवमुदारसुवर्णमूर्तिम् ।
सूरीन्द्रनाथमपि चादि परं च तेजः
किं वा वदन्मम विभुं बत विस्मरेयम् ॥

१०. मरप्पुम् ज्ञानुम्—

विस्मर्तुमप्यहह वेत्तुमहं न शक्तो
यद्विस्मरेदयमिति स्वयमेव मत्वा ।
श्रीपुण्डरीकनयनो मम भाति चित्ते !
रत्नं कथं मणिनिभं मम विस्मरेयम् ? ॥

११. मणियै वानवर् कण्णनै—

माणिक्यवर्णमपि सूरिवरेन्द्रनाथं
कृष्णं तमप्रतिमसुन्दरमूर्तिमीशम् ।
स्तोतुं शठारिरतनोत्सुरसं सहस्रं !
तत्रेदमेव दशकं पठतां हि सिद्धिः ॥

इति श्रीपरमात्मना श्रीमत्कल्किसिंहमहाकवीन्द्रेण
विरचितायां सहस्रगाथारत्नावळ्यां
॥ प्रथमशतकं सम्पूर्णम् ॥

——(*)——

## अथ द्वितीयशतके

### प्रथमदशकम् ( वायुन्तिरैयुकलुम् )

( अत्र शठारिर्भगवतो बाह्यसंश्लेषमभिलषन् तदलाभाद-
त्यन्तमार्तस्सन् स्वयं नायिकावस्थां प्राप्य-
स्थावरतिर्यगादिभिस्सह
प्रलपति ।

१. वायुन्तिरैयुकलुम्—

उद्यत्तरङ्गजलधौ बंक ! सम्प्लवान !
क्लिष्टोऽसि किं ? किमहहामरनिद्रयाऽपि ।
निर्निद्र एव हि भवान् ! किमु पीडितोऽसि ?
किं पाण्डरोऽस्यहमिवाद्य हरेर्वियोगात् ? ॥

२. कोळप्प शिन्दैयाय्—

हे ! सुन्दरद्विज महार्तरवोऽसि दीनो
यामेषु सन्ततमहो ! विलपन् किल त्वम् ।
अस्मादृशोऽस्ति विरहार्तिवशो भवान् किं
श्रीशेषशायिपदसत्तुलसीस्पृहार्द्रः ? ॥

३. कामुत्तकैयरवोडु—

भोगैर्विहीन इव हन्त ! दिवानिशं त्वं
निर्निद्र एव विलपस्यहहार्द्रचित्तः ।
लङ्काप्रदाहिपदसक्तिदशां मदीयां
किं प्राप्तवानसि समुद्र! तवास्तु भद्रम् ॥

---

(१) नाराय्—पक्षिविशेषः ।
(२) अनिल्—पक्षिविशेषः ।



४. कडलुम् मलैयुम्—

शीताङ्ग वात जलधावचलेऽन्तरिक्षे
सर्वत्र तं किल विचित्यतु मादृशोऽसि ।
निर्निद्र एव च दिवानिशमच्युतं तं
द्रष्टुं हि चक्रिणमहो सततं स्पृहार्तः ॥

५. ऊळिदोरूळि—

हे वारिद ! त्वमपि भासि महाश्रुपातै-
रस्मादृशः किल सदाऽपि च वर्षवाहिन् ।
किं वा विचिन्त्य मधुसूदनपौरुषं तत्
खिन्नोऽसि तत्परवशो बत तेऽस्तु भद्रम् ॥

६. नैवायवेम्मेपोल्—

हे चन्द्र ! किं क्षयवशोऽसि कलावशेष-
स्त्वं मादृशोऽद्य गगने न तमोऽपहारी ।
किं त्वं द्विजिह्वशयनस्य सुचक्रिणस्तत्
सत्यं वचो बत ! निशम्य कलाविहीनः ॥

७. तोत्तोम् मडनेञ्जम्—

नारायणाय विभवे वयमद्य चित्तं
भव्यं समर्प्य नितरां विरहातुरा हि ।
कन्दाम एव महह त्वमहो निशे! किं
क्रूराऽसि वैरिवदनारतमस्तु भद्रम् ॥

८. इरुळिन् तिणिवण्णम्—

कुल्ये! निशेव सततं बहुनीलवर्णे
निद्रासि नैवहि दिवानिशमुद्भ्रमान्धा ।
देवस्य तस्य शकटासुरमर्दनस्य
त्वं किं कृपागुणजिता हृदि कर्शिताऽसि ॥

९. नोन्दाराक्कादल् नोय्—

हे दीपिके! सततमुज्ज्वलविग्रहे! त्वं
सन्तप्तचित्तविकला नितरां हि खिन्ना ।
किं पुण्डरीकनयनस्य तु मत्प्रभोस्त्वं
बिम्बाधरस्य तुलसीमभिलष्य तप्ता ॥

१०. वेवारावेळ्कैनोय्—

आशा हि तापजननी नितरां कृशां मां
नक्तन्दिवं च तुदति त्वमहो हयं तम् ।
हत्वा च केशिनमतीव हठात्प्रविश्य
द्वन्द्वासुरघ्न! पृथिवीहर! मां न मुञ्चेः ॥

११. शौरादवेष्पोरुल्कुम्—

सर्वात्मनामपि च मूलमनादि तेजः
प्राप्तुं परं शठरिपुः कुरुकापुरेशः ।
साहस्रमाह तदिदं दशकं पठन्त-
स्तत्र प्रयान्ति परमं पदमेव धन्याः ॥

---

## अथ द्वितीयशतके

### २. द्वितीयदशकम् (तिण्णन् वीडु)

( तादृशार्तिनिरसनाय सन्निहितमीश्वरं दृष्ट्वा तस्य परत्व मवतारेष्वपि प्रकाशत इति परोपदेशं करोति । )

१. तिण्णन् वीडु—

दिव्यामृतात्मकमुदारफलं च मुक्ति-
स्सर्वं स्वयं प्रभुरसौ मनसोऽप्यतीतः ।
भूमिं द्युलोकमखिलं जठरे निवेश्य
कृष्णश्चकास्ति परतत्त्वमितोऽपि नान्यत् ।



२. एपावम्परमे—

रुद्रस्य तस्य गुरुपातकमोचकोऽयं
भिक्षाप्रदानकर एव च गोपसिंहः ।
योऽसौ कृपालुरतनोदपि सप्तलोकीं
धन्यां स एव फलदोऽस्ति परःपुमान्नः ॥

३. एरनैप्पूवनै—

रुद्रं सरोजभवमप्ययमच्युतस्स्व-
स्याङ्गे यतश्श्रियमिव स्वयमेव धृत्वा ।
सौशील्यवानतिगतो हरिरूर्ध्वलोकान्
भूमिं जिगाय किमितः परमस्ति दैवम् ॥

४. तेवुमेप्पोरुल्म्—

देवाद्यशेषजगतामपि सृष्टिहेतो-
स्तं नाभिपद्मभवमादियुगे तु सृष्ट्वा ।
देवश्चकास्ति परमः प्रभुरिन्दिरेशः
किं वेतरोऽर्हति सुमाद्युपहारमालाम् ॥

५. तकुंशीर्त्तन् तनिमुदलिनुळ्ळे—

नित्योचितस्वमहिमान्वित एव चादौ
देवादिसृष्टिमपि तां परमां चकार ।
श्रीपुण्डरीकनयनः परमाच्च तस्मा-
ज्ज्योतिः परं किमपरं बत वेत्ति को वा ! ॥

६. यवरुम् यावैयुमेल्लाप्पोरुल्म्—

सर्वेऽपि चेतनगणा यदचेतनाश्च
स्वस्मिन् किलांशशकला इव दर्शितास्ते ।
सोऽयं हि विश्वतनुरस्ति परं च तेजः
क्षीराब्धिशाय्यमितधीः परमः प्रभुर्नः ॥

७. पळ्ळियालिलै—

धृत्वा निजोदरतले किल सप्तलोकीं
धीरश्शिशुर्वटदळे शयितः प्रभुर्नः ।
गोप्यं च तस्य गहनं च विचित्रमाया-
सङ्कल्पवैभवमिदन्तु विदुस्स्वयं के ? ॥

८. करुत्तिल् तेवुमेल्लाप्पोरुळुम्—

सङ्कल्पतस्सुरनरादि समस्तलोकान्
संवर्ध्य भाति परमः प्रभुरेष मायी ।
एवं विना किमपरो जगतां स्थितिं त-
द्रक्षां च कर्तुमुचितः प्रभुरस्ति कश्चित् ॥

९. काक्कुमियल्विनन्—

संरक्षणाय जगतां प्रभुरेष कृष्ण-
स्सर्वानपि स्वजठरे कृतवान् हि लोकान् ।
तं नाभिसम्भवमजं चतुराननं तं
देवेन्द्रमप्यमरबृन्दमुखानसूत ॥

१०. कळवावेम्मैयुमेल्लुलकुम्—

मायामयोऽसि भगवन्नखिलान् किलास्मान्
त्वय्येव दर्शयसि सर्वजगत्ततीश्च ।
इत्येव रुद्रचतुराननशर्वमुख्या
देवा भजन्ति गरुडध्वजपादयुग्मम् ॥

११. एत्तवेल्लुलकुम्—

स्तव्यं समस्तजगतामपि मानमूलं
रम्याकृतिं शठरिपुः कुरुकापुरीशः ।
स्तोतुं सहस्रमवदद्दशकं च दिव्यं
तत्रेदमत्र पठतां न हि दोषगन्धः ॥

---



# अथ द्वितीयशतके

## ३. तृतीयदशकम् (ऊनिल्वाळ्)

( तादृशपरत्वोपेतस्य भगवतोऽनुभवाय संसारिचेतना न सहायभूता इति नित्यसूरिभिस्सह सङ्गमं प्रार्थयतेऽत्र शठारिः । )

१. ऊनिल् वाळुयिरे—

हे चित्त ! स्वयमत्रभासि वपुषि ! स्वस्त्यस्तु ते साध्वसि
त्वां प्राप्यैव हि सूरिराणमधुरिपुस्स्वामी ममायं हरिः ।
सोऽहञ्चैकरसात्मकं हि युगळं क्षीरं घृतं सन्मधु
स्वादुश्चेक्षुरसो घनश्च सकलं दिव्यामृतं सङ्गतम् ॥

२. ओत्तार् मिक्कारै—

स्वामिन् ! नैव समोऽधिकोपि च तव श्रीशासि मायामयो
जातश्चासि सजातिरेव सकलैरात्माऽसि सर्वात्मनाम् ।
माता मेऽसि पिताच मे गुरुरसावज्ञातसंशिक्षक-
स्त्वं नाथासि महोपकारनिरतो ! नो वेद्मि कृत्यानि ते ॥

३. अरियाक्कालत्तुळ्ळे—

वेषाद्वामन एव सुन्दरवटुस्त्वं भूर्बले ! त्रिक्रमे-
त्येवं वञ्चक एव मोहजनको विष्णो ! मया सङ्गतः ।
मायासंसृतिवार्धिमग्नमपि मां जित्वा हठात्ते हरे !
दास्ये नित्यरतं किलाद्यकृतवान् ! भातीदमत्यद्भुतम् ॥

४. एनवावियुळ् कलन्द—

नाथ ! त्वं जठरे समस्तभुवनान्यादौ प्रवेश्य स्वयम्
त्राता मामपि रक्षसीति कृतवित्स्वात्मार्पणं चाचरम् ।
न स्यादस्य निवृत्तिरात्मन इह त्वं भासि चात्मा मम !
स्वात्मा को मम? कोऽस्म्यहं? स्वयमिहस्वीयं हि दाताऽवृणोः ॥

५. इनियार् ञानङ्ङलाल्—

ज्ञानाधिक्ययुतैरनाश्रितगणैर्न प्राप्यसे त्वं विभो !
भक्तानां स्वयमेव मोक्षसुखरूपोऽसीह दिव्यामृत ! ।
व्यावृत्तो भववारिधेरहमहो ! त्वञ्चादिरुत्तारको !
वाराहोऽसि जगद्धरस्त्वदर्शनेनाहं त्वदङ्घ्री श्रितः ॥

६. शेन्दॊर्तीविनैकळ्कु—

पापध्वंसकरोऽसि संश्रितवतां दिव्यां मतिं प्रापयन्
त्वं विश्लेषविवर्जितः किल सदाऽनन्यान् करोष्येव तान् ।
तेजोरूपधरश्च तामसरुचिं सर्वां प्रहृत्य स्वयं
क्रूरां शूर्पणखामिवासि भगवन् ! प्राक्त्वामहं संश्रितः ॥

७. मुन्नल्याळ्पयिल्नूल्—

पूर्वं साधु सुगीतवाद्यरसिकै र्गानामृतं दापयन्
भक्तानां परमोऽस्ति सेव्यतम एवाहो ! पवित्रो भवान् ।
त्वं भासीक्षुरसोऽमृतश्च जलदो नीलो ममासि प्रभुः !
कृष्ण ! त्वान्तु विना न जीवितधरस्स्यां ! त्वं वृणु श्रीश मां॥

८. कुरिक्कोळ् ञानङ्ङलाल्—

शिक्यस्थां नवनीतदुग्धसरणिं सर्वां च भुक्त्वा रह-
स्येव त्वं मम नायकोऽसि भगवन् ! पापान्यहं खण्डयन् ।
दिव्यज्ञानयुतैस्तपोबल महाभाग्येन लभ्यां गतिं
दिव्यां तां चिरकालतोऽपि सहसैवाहं गतोऽस्यां जनौ ॥

९. कडिवार् तण्णन्तुळाय्—

बिभ्राणस्य सुगन्धवाहितुलसीमालां च कृष्णस्य वै
सूरीणामपि नायकस्य परमस्याहं पवित्रस्य च ।
कल्याणेषु गुणेषु मग्नहृदयः पापाब्धिसंशोषकः
सर्वत्रापि भृशं प्रविश्य सुगुणानापीय मोदेत मन् ॥



१०. कळिप्पुम् कवर्वुमत्तु—

उत्साहं च विषादमप्यहमहो ! दूरे विहाय त्यजन्
जन्मव्याधिजरामृतीश्च महसां ज्योतिःपरं शाश्वतम् ।
स्वर्लोकं धरणीं च पातुमनिशं श्रीशङ्खचक्रान्वितं
देवं तं भजतां कदानु महतां गोष्ठीमुपैमि स्वयम् ! ॥

११. कुळाङ्गोळ् पेररक्कन्—

सङ्घीभूतनिशाचराधिपकुलच्छेदाय रोषान्वितं
देवं सज्जनबृन्दवन्द्यकुरुकाधीशश्शठारिर्मुनिः ।
स्तोतुं चाह सहस्रपद्यसरणिं दिव्यां सुबन्धावळीं
तत्रेदं दशकन्तु भक्तनिवहैस्सङ्कीर्त्य भो ! नृत्यत ॥

---

## अथ द्वितीयशतके

### ४. चतुर्थदशकम् (आडियाडियकङ्करैन्दु)

( तादृशप्रार्थनस्य निष्फलत्वात् नायिकावस्थां प्राप्य मुग्ध-
स्सन् शठारिरत्र नायिकाजननीवचनमनु-
वर्णयति । )

१. आडियाडियकङ्करैन्दु—

भास्वल्ललाटललिता तनया ममेयं
भ्रान्ता चरत्यहह ! विद्रुतचित्तभित्तिः ।
गीतानि गायति ततो गळिताश्रुधारा
ऽप्यन्विष्य शुष्यति विभो ! नृहरे ! ममेति ॥

२. वाणुदलिम्मडवरल्—

सेयं लसन्मुखतला मम कोमलाङ्गी
त्वद्दर्शनाय विरहादिह भाति खिन्ना ।
बाणासुरस्य तु सहस्रभुजच्छिदेवं
किं निर्दयोऽसि ? तव दर्शनकामिनीयम् ॥

३. इरक्कमनत्तोडु—

क्लेशादियं मनसि हन्त ! विभाति चाग्नौ
लाक्षादिवद्द्रुततनुर्बत ! निर्दयोऽसि ।
लङ्कान्तु राक्षसपुरीं नितरां प्रणाश्य
प्रख्यातिमान् किलभवान् ! किमु तेऽद्य कुर्याम्? ॥

४. इलङ्कैशेत्तवनेयेन्नुम्—

लङ्कापुरप्रमथनेति वदेत्पुनश्च
तार्क्ष्यध्वजेति च वदेदियमुच्छ्वसन्ती ।
सन्तप्तमानसतया किल साश्रुधारा
भ्रान्तिं गता भवति साञ्जलिबन्धहस्ता ॥

५. इवकिराप्पकल्वाय्वेरीइ—

नक्तन्दिवं भ्रमवचांसि हठाद्वदन्ती
नीलोत्पलाक्ष्यभवदेव हि साश्रुधारा ।
भृङ्गावृतां च सरसां तुलसीं न दद्याः !
किं वेदृशी तव कृपा बत ! शुद्धशील ? ॥

६. तकवुडैयवनेयेन्नुम्—

सेयं द्रवीकृततनुर्विगतस्वचित्ता
हा ! हन्त ! जल्पति सुशील ! दयापरेति ।
संवर्धिताभिलषितोऽसि ममेश्वरेति
स्वात्मान्तरोऽसि च ममामृतसागरेति ॥



७. उळ्कुलावियुलन्दुलन्दु—

सेयं हि वञ्चनपरा हृदयं न वक्ति
व्यक्तं ! स्वयं स्वविटवञ्चनकृत्यखिन्ना ।
संशोषितात्मकतया वदतीह कृष्णे-
त्यौदार्यवन्निति च वार्धिशयेति भूम्ना ॥

८. वञ्जनेयेन्नुम्—

हे ! वञ्चकेति वदति स्वयमञ्जलिं च
स्वैरं करोति बत ! दग्धनिजान्तरङ्गा ।
सेयं हि निश्श्वसिति हा ! शरणं प्रपन्ना
त्वां कंसवञ्चक ! कथं बत ! वाऽनुभूयात् ? ॥

९. पट्टपोदेळुपोदरियाळ्—

अस्तं न वेत्ति ! न च वेत्ति किल प्रभातं
सेयं सदाऽपि तुलसीं तव वक्ति रम्याम् ।
ज्वालाकुलातिनिशिताननचक्रपाणे !
दीनामिमां प्रति किमस्ति तवाद्य चित्ते ? ॥

१०. एळै पेदै—

दीनात्वियं भ्रमवशा हि दिवानिशं चा-
प्यश्रुप्रवाहभरिताऽस्त्यसितायताक्षी ।
लङ्कां प्रणाश्य किल कण्टकदुष्प्रभुत्वं
प्राध्वंसयोऽद्य परिपाहि कटाक्षमस्याः ॥

११. वाट्टमिल्पुकळ् वामनै—

नित्यामुदारगुणवामनदिव्यकीर्तिं
स्तोतुं मुनिश्शठरिपुः कुरुकापुरीशः ।
छन्दोनिबद्धमिह पद्यसहस्रमाह ।
स्यात्तत्पदाब्जयुगळे दशकं त्विदं स्रक् ॥

———०———

## अथ द्वितीयशतके

### ५. पञ्चमदशकम् (अन्दामत्तन्बु शेयूदु)

( अत्र भगवत्संश्लेष सन्तुष्टस्तदीय दिव्यभूषण-दिव्यायुध दिव्यावयव सौन्दर्यादिकं नित्यसूरिसेव्यत्वं चानुसन्दधाति शठारिः। )

१. अन्दामत्तन्बु शेयूदु—

स्थित्वाऽसौ परमेपदे मम हृदि स्वैरं प्रविष्टोऽधुना !
दिव्यस्रग्विकिरीटचक्रजलजा यज्ञोपवीत स्रजौ ।
एता भान्ति किलास्य नेत्रयुगळं बिम्बाधरं चाङ्घ्रियुक्
सर्वं चाम्बुजसन्निभं ! तनुरहो दिव्या सुवर्णात्मिका ॥

२. तिरुवुडम्बुवान् शुडर्—

त्यक्त्वाऽसौ सकलं मया सह हरिस्साक्षात् स्वयं सङ्गतो !
नाथस्यास्य तनुर्विभाति दिनकृद्वर्णा च पद्मे दृशौ ।
हस्तौ चाम्बुरुहौ ! श्रियोऽस्ति वसतिर्वक्षस्स्थली ! ब्रह्मणो
नाभिर्भाति च जन्मभूरहह ! तल्लिङ्गं हरस्याप्यहो ! ॥

३. एन्नुळ् कलन्दवन्—

सम्यग्भाति महोज्वलः किल मया सङ्गत्य नाथो मम
श्रीशस्यास्य महाचलस्य वदनं नेत्राङ्घ्रिहस्तात्मकम् ।
सर्वं भाति सरोजमेव ! जगतां स्थानं किलास्योदरं !
नैव स्यात्किल किञ्चिदप्यहह ! हा ! तस्मिन्न यत्सङ्गतम् ॥

४. एप्पोरुळुम् तानाय्—

सोऽयं सर्वकलासु सर्वदिवसेष्वप्यस्ति मासेष्वहो !
सर्वेष्वेव समस्तवत्सरगणेष्वेवं हि कल्पेष्वपि ।



सङ्गत्यैव मया सहामृतनिधिश्चाशोष्य एव स्वयं
सर्वात्माऽसितपर्वतोऽम्बुजमिदं नेत्राङ्घ्रिहस्तं नवम् ॥

५. आरावमुदमाय्—

सम्पूर्णामृतवारिधिर्हृदि ममाप्यन्तः प्रविश्यासतो
नाथो मेऽस्ति हि नीलमेघसदृशः कृष्णः प्रभुर्निस्समः ।
चक्षुःपादकरे न पद्ममुपमा ! नैव प्रवाळोऽधरे
भूयादस्य लसन्ति हारमकुटौ काञ्च्यादिभूषागणाः ॥

६. पलपलवेयाभरणम्—

दिव्यान्याभरणानिचाप्यगणितान्यस्यास्तिनामावळि-
र्दिव्याचाप्यमिताऽस्ति रूपसरणिर्दिव्याऽप्यनन्ता हरेः ।
दिव्यं दृष्टिरुचिश्रुतिस्पृगुदितं घ्राणेन्द्रियस्थं सुखं
सर्वं चामितमेत्र शेषशयितुर्ज्ञानं च दिव्यं बहु ॥

७. पाम्बणैमेल् पार्कडलुळ्—

क्षीराब्धौ शयनं च शेषशयने नीळार्थमेवाद्भुतः
ख्यातस्सप्तवृषप्रहार इह योऽभूत्सप्तसालाहतिः ।
तत्सर्वं कृतवान्मदर्थमयमेवात्यन्तरम्याकृतिः
विष्णुश्श्रीवृषवीर्यभाक् च तुलसीमालाकिरीटोज्वलः ॥

८. पोन्मुडियम्पोरेत्तै—

दीप्तोत्तुङ्गकिरीटधारिणममुं वीरश्च मे नायकं
रम्याजानुचतुर्भुजं निरवधिश्रीकं तुलस्यञ्चितम् ।
नीचेनापि मयाऽद्य सङ्गतमहं किं वर्णयामि स्वयं
वाचा ! हन्त ! न गोचरोऽस्ति वचसः किं ब्रूथ यूयं स्वयम्? ॥

९. शोल्लीरेन्नम्मानै—

यूयं कीर्तयताच्युतं ममविभुं चात्मानमप्यात्मनो
निस्सीमाखिलसद्गुणं मणिनिभं ज्योतिश्च दिव्यामृतम् ।

मोक्षस्यापि परंपदं त्वसुलभं तं योगिनामप्यहो
पद्मान्तश्च सुगन्धिबीजममलं नारीनरेभ्यः परम् ॥

१०. अ।वल्लन् पेण्णल्लन्—

न स्त्री नापि पुमान्नषण्ड इति च प्रामाण्यवद्यो न हि
स्वामी मे न हि चास्त्यसन्न खलु सन् भक्तात्मनां सुप्रियः ।
तेषां चाभिमतोरुदेह इतरोऽप्यास्ते स्वयं श्रीहरि–
स्तं चैनं न हि शक्तिरस्ति वचसा वक्तुं ! न वक्तुं च मे ॥

११. कूरुदलोन्नारा—

एकं चापि गुणन्तु यस्य वचसा वक्तुं न शक्तिर्भवे
त्तं स्तोतुं प्रभुमच्युतं घटविहारादिप्रियं श्रीधरम् ।
साहस्रं कुरुकापुरप्रभुरयं मौनी शठारिर्जगा–
वन्ताद्यं दशकं च तत्र तदिदं दिव्यं पदं प्रापयेत् ॥

---

## अथ द्वितीयशतके

### ६. षष्ठदशकम् (वैकुन्दामणिवण्णने)

( अत्र श्रीशठारेरतिनैच्यं विलोक्य भगवतोऽतिशङ्का सञ्जा–
तेति तत्परिहारार्थं " नाहं त्वां कदापि–
त्यजेयम् "–इति प्रतिजानीते । )

१. वैकुन्दामणिवण्णने—

वैकुण्ठासि मणिप्रभः किल मम श्रीवामन ! त्वं प्रिय–
स्संश्लेषं मयि सन्दधासि सततं दिव्यामृतात्मा महान् ।
सम्पूर्णोऽसि फलप्रदश्च नमतां घोराघहन्ता हरे !
दुष्टानामसि कुन्तवत्प्रमथनस्त्वां संश्रितोऽस्मि स्थिरम् ॥



२. शिक्केनच्चिरिदोरिडमुम्—

ईषद्वाऽपि नहि त्यजेद्बहिरहो ! लोकानशेषान् वहन्
स्वस्मिन्नेव किल स्वयं मयि विशन् ज्ञानप्रभाभास्वरः ।
तेजोराशिरुदारसद्गुणनिधिर्दिव्यामृतात्मा हरिः
पद्माक्षो मम नायको ऽन्यपरतां सन्त्यज्य मय्यास्थितः ॥

३. तामरैक्कण्णनै विण्णोर्परवुम्

पद्माक्षं दिवि नित्यसूरिनिवहैस्स्तव्यं ममैव प्रभुं
पुष्पोद्यत्तुलसीस्रजं च कनकाद्रिं श्रीधरं सादरम् ।
स्तुत्वा तं मनसा विचिन्त्य वपुषा चानम्य हृष्टा वयं
नृत्यामोऽद्य ! स एव पद्यरचने शक्तिं च मेऽदात्स्वयम् ॥

४. वळ्ळले मधुसूदना एन्मरकतमलैये—

नित्योदार ! ममप्रभुं मरकताद्रिं त्वां मधुध्वंसिनं
स्मृत्वाऽन्यत्सकलं विसृज्य सुगुणाम्भोधौ निमग्नोऽस्मि ते ।
नृत्यन् गानपुरस्सरं प्रमुदितः प्रध्वस्तदुःखोऽधुना
धन्योऽहं तव सन्निधावनुभवं प्राप्य त्यजाम्येव किम् ? ॥

५. उयून्दु पोन्दु—

क्षीराब्धौ शयितोऽसि शेषशयने तां योगनिद्रां भजन्
मन्नाथ ! त्वदुदाररूपगुणभूत्यादिस्मृतेर्धन्यताम् ।
लब्ध्वाऽहं सकलाघसन्ततिहतिं कृत्वाऽधुना श्रीहरे !
त्वद्दास्यं परमं शुभं निरवधि प्राप्तस्त्यजाम्येव किम् ? ॥

६. उन्नैच्चिन्दै शेयूदु शेयूदु—

वक्षस्तस्य हिरण्यकस्य मनसाऽपि त्वां तु धिक्कुर्वत–
स्सम्भिद्यासि पुरा नृसिंह ! जगतां त्राता ! स्मरंस्त्वामहम् ।
दिव्यां पद्यततिं विरच्य वचसा गायंश्च नृत्यन्नहो !
निर्मूल्याप्यघसन्ततिं मम सुखी ! किं वाऽस्त्यसाध्यं मम ? ॥

७. मुडियाददेन्नेनक्केलिनि—

सर्वेषां जगतां च भक्षणकरस्सम्यक् प्रविष्टो मयि
श्रीशो नैव हि मां त्यजे त्पुनरसौ ! मद्बान्धवाश्चाखिलाः।
तेऽमी सप्त च पूरुषाः कुलभवाः प्रध्वस्तपापास्स्वयं
हत्वा नारकदुर्गतिं प्रमुदिताः ! किंवाऽस्त्यसाध्यं मम ? ॥

८. मारि मारि प्पलपिरप्पुमपिरन्दु—

जन्मान्यत्र पुनःपुनश्च सुबहून्याश्रित्य चाद्यास्म्यहं
त्वत्पादाम्बुजसंश्रयो हृदि महानन्दामृताब्धौ स्वयम्।
मग्नोऽस्मीह! भवान् किलासुरगणप्रध्वंसकं वाहनं
तार्क्ष्यं भात्यधिरूढ एव ! मयि नाथात्रैव नित्यं भव ॥

९. एन्दाय् तण् तिरुवेङ्कडत्तुळ्—

स्थित्वा वेङ्कटभूधरे विजयसे मन्नाथ! लङ्कान्तक !
त्वं सालानपि सप्त चैकहतितश्छित्वाऽसि धन्वी महान्।
भासि त्वं किल दिव्यरम्यतुलसीमालोऽद्य दिव्यामृत!
त्वां सम्मिश्रय मयीह नायक! कथं देवेश ! यास्यन्यतः? ॥

१०. पोकिन्नकालङ्गळ् पोयकालङ्गळ्—

कालेष्वद्यतनेष्वतीतसमयेष्वागामिकालेष्वपि
त्वं माता च पिता ममासि हि! ममाप्यात्मा जगन्नायकः।
सौशील्याम्बुनिधिं च वेङ्कटपतिं त्वां दिव्यमालोज्ज्वलं
संश्रित्याद्य कथं त्यजामि तुलसीसौगन्ध्यसारान्वितम् ? ॥

११. कण्णिसण्णन्तुळाय् मुडि—

मालाकारसुरम्यशीततुलसीभास्वत्किरीटं हरिं
स्तोतुं पद्मविशाललोचनमसौ सूरिश्शठारिर्मुनिः।
साहस्रं कुरुकापुरप्रभुरहो ! माराभिधानोऽब्रवी-
त्तत्रेदं दशकं प्रगाय रसिकास्स्युः केशवस्य प्रियाः ॥

———०———



# अथ द्वितीयशतके

## ७. सप्तमदशकम् ( केशवन् तमर् )

( श्रीभगवतस्स्वविषये सञ्जाता प्रीतिस्स्वसम्बन्धिसम्बन्धि-
परम्पराविषयेऽपि जातेति शठारिरत्र केशवादि
द्वादशनामप्रतिपाद्यं तं प्रपद्य स्ववंश्यास्सप्त
सप्तजन्मोत्पन्ना अप्युज्जीविता
इति निरूपयति ॥ )

१. केशवन् तमर्—

श्रीमत्केशवसंश्रयाः किल मम प्राप्ताः कुलोत्पादिता-
स्ते पूर्वोत्तरसप्तसप्त! महतीं दिव्यां गतिं वैष्णवीम्।
ईशस्यास्य मम प्रभोरिह महामाणिक्यवर्णस्य च
श्रीसूरीन्द्रपतेः प्रसादभरतो नारायणस्याश्रयात् ॥

२. नारणन् मुलुवेलुलकुक्कुम्नादन्—

श्रीनारायण एव सर्वजगतां नाथोऽस्ति वेदात्मको
मूलं कारणमस्ति कर्म च कृतिः पूर्वश्च सर्वात्मनाम्।
स्तव्यस्सर्वगुणाकरो ऽमरगणैरन्यैश्च सर्वैरयं
स्वामी मत्तगजस्य दन्तभिदहो! मे नायको माधवः ॥

३. मादवनेन्नदे कोण्डु—

सत्यं ! माधवनामकीर्तनबलात्स्वामी मम श्रीधरो
नानादोषततिं प्रहन्तुमपि मे चित्ते प्रविश्य स्वयम्।
सर्वाघप्रशमप्रभुः किल सुधापूरोऽब्जनेत्रो महा—
नद्रिप्राय इहेक्षुखण्डशरधिर्गोविन्द एवाच्युतः ॥

४. गोविन्दन् कुडक्कूत्तन्—

गोविन्दो मम नायकः प्रभुरसौ जिष्णुर्घटैर्लीलया
गोपालो विहरन्महानिति पृथक् सङ्कीर्त्य नृत्तादिभिः ।
सोऽहं यामि च सञ्चरन् मम महापापावळिं ध्वंसयन्
मद्बन्धूंश्च स सप्तसप्त पुरुषान् विष्णुर्निजानातनोत् ॥

५. विट्टिलङ्गु शङ्जोदि—

विष्णोरस्य मम प्रभोस्सुरुचिरश्रीमौलिभूषाभृतो
दिव्यं भाति सरोजमेव चरणौ हस्तौ च नेत्रे हरेः ।
दीप्रो नीलमहाद्रिरेवहि तनु श्चन्द्रोऽस्ति शङ्खो महा—
नादित्यो मधुसूदनस्य रुचिरश्चक्रायुधात्मा विभोः ॥

६. मदुसूदनैयन्रि—

नान्यं श्रीमधुसूदनात्किल परं प्राप्यं भजेऽहं सदा
कार्यं मे न किलापरैरिति हरिं तं मेऽद्य पद्यैस्स्तुवन् ।
एवं कल्पसहस्रतोऽपि विविधां जन्मावळीं मे स्वयं
ज्ञात्वा मेऽभिमुखो दयाळुरवशो दत्तेऽखिलं त्रिक्रमः ॥

७. तिरिविक्किरमन् शेन्दामरैक्कण्—

श्रीश ! त्रिक्रम ! पुण्डरीकनयन ! स्वामिन् ! सुबिम्बाधर !
त्वं भास्येव शुचिस्मितस्त्विति पृथक् त्वत्सद्गुणां श्चिन्तयन् ।
शंसंश्च प्रणमन् पदाब्जयुगळं कल्पेष्वनकेषु ते
सम्प्राप्यास्मि हि दास्यसक्तहृदयस्त्वं वामनो मे प्रभुः ॥

८. वामननेन् मरतकवण्णन्—

हे ! श्रीवामन ! नीलरत्ननिभ ! मे पद्माक्ष ! कामोद्भवे-
त्येवं त्वत्पदपद्मकीर्तनपरो नत्वाऽस्मि शुद्धाशयः ।



जाड्यं जन्मभवं प्रणाश्य मनसो दोषान् प्रहत्यापि मे
स्वामिन् पूर्णमहाश्रियः ! किमुहरे ! कुर्यान्तव श्रीधर ॥

९. शिरीदरन् शैय्यतामरैकण्णन्—

स्वामिन् ! श्रीधर ! रम्यपद्मनयनेत्येवं हि नक्तन्दिवं
जल्पन् भ्रान्त इवाश्रुपूर्णनयनस्सन्तप्तचित्तोऽभवम् ।
तामार्तिं मम नाशयन् प्रमुदितं कुर्वन् सदा मां हरे !
त्वं मे भासि हृदि स्वयं किल हृषीकेश ! प्रतिष्ठापितः ॥

१०. इरुडीकेशनेम्बिरान्—

मन्नाथ ! त्वमुदारसद्गुण ! हृषीकेशासि लङ्केशितु-
र्हन्ता तस्य दशाननस्य हि हरिर्देवाधिदेवोऽच्युतः ।
इत्येवं मम मानस ! त्वमनुसन्धाय प्रणामं कुरु !
क्षिप्रं त्रिद्धि ! यदि भ्रमोऽस्ति च पुनर्मा पद्मनाभं त्यज ॥

११. पर्पनापनुयर्वरवुयरुम्—

उत्तुङ्गोऽस्ति हि पद्मनाभ इह मे स्वामी परश्शक्तिमान्
स्वीकृत्यापि च मां ममापि विवशश्रीकल्पकश्चामृतम् ।
नीलाम्भोदसमश्च वेङ्कटगिरौ भाति स्वयं नायक-
स्सूरीणामधिपश्चकास्ति च हरिर्दामोदरो मे प्रभुः ॥

१२. दामोदरनैत्तनिमुदल्वनै—

श्रीदामोदरमादिमूलमखिलान् लोकान् स्वयं चोदरे
बिभ्राणं कथमप्रमेयविभवं ज्ञातुं वयं शक्नुमः ?
इत्येवं हि चतुर्मुखेश्वरमुखा देवाश्च दामोदर—
स्यांशास्स्तोतुमनर्हतां जगुरहो ! नाथं न मे ते विदुः ॥

१३. वण्णमामणिचोदियै—

नीलश्रीमणिवर्णमच्युतमिमं ज्योतिः परं सूरिणां
नाथं कृष्णमुदारमेव कुरुकानाथ शठारिर्मुनिः ।
प्राप्तुं चाह सहस्रमुत्तमकृतिं तत्रापि च द्वादश—
श्री नामप्रतिपादकन्तु तदिदं पादौ हरेः प्रापयेत् ॥

---

## अथ द्वितीयशतके

८. अष्टमशतकम् ( अणैवदरवणै मेल् )

( ईश्वरस्य संसारिणां विषयेऽपि कारुण्यं प्रतिपाद्य
तेषामुज्जीवनाय स्वमोक्षप्रदत्वोपदेश
प्रकारं वर्णयति । )

१. अणैवदरवणै मेल्—

शेषे किलास्य शयनं प्रियमस्ति विष्णो—
र्लक्ष्मीतनो र्भवति सङ्गम एव भोग्यः ।
मूलं तयो र्विधिशिवात्मकयोस्स सर्वो
मोक्षप्रदोऽस्ति च भवार्णवपोतरूपः ॥

२. नीन्दुम् तुयर्प्पिरवि—

शीतह्रदेऽम्बुजयुते गजदुःखहन्ता
मन्नायकोऽस्ति तुलसीशुभहारभूषः ।
सङ्गोऽस्य सर्वजगतां भवदुःखहन्ता
सर्वार्तिहृद्भवति मोक्षसुखस्य मूलम् ॥

३. पुणर्कुमयनामळिक्कुमरनाम्—

स्वोद्भूतिनाभितलपार्श्वनिवासशीलो
धाताऽपि सृष्टिकृदसौहि हरोऽपि हन्ता ।



युक्तश्श्रियोरसि निजाद्भुतशीलवृत्तै—
स्सर्वान्तरात्मकतयाऽस्त्यभितः प्रसिद्धः ॥

४. पुलनैन्दु मेयुम्—

पञ्चेन्द्रियै विषयपञ्चकभुक्तिसक्तैः
मुक्ताः परं पदमनन्तसुखं विशन्तः ।
यूयं भवेत सकलासुरनाशकस्य
श्रीशस्य सन्ततबलादिगुणाब्धिमग्नाः ॥

५. ओवात्तुयरुप्पिरवियुळपड—

नानार्तिसन्ततिकरीमपि सृष्टिमेतां
रक्षां च संहृतिमनादिरयं हि कुर्वन् ।
देवाधिदेव इह मेऽस्ति च तीर्थरूपो
वाजी च मत्स्यकमठादिग्हो ! नरात्मा ॥

६. तीर्तनुलकळन्द शेवडिमेल्—

तीर्थस्य यस्य पदयोः कुसुमावळीं तां
भक्त्या समर्प्य शिवमस्तक एव दृष्टा ।
पार्थेन तेन विदितं प्रथितं परत्वं
तस्याद्य किं बत ! पृथक् प्रतिपाद्यमेव ? ॥

७. किडन्दिरुन्दु निन्नळन्दु—

शय्यां गतोऽप्युपविशन्नपि चात्र तिष्ठन्
पादेन चाक्रमणतोऽपि वराहवेषात् ।
उद्धृत्य चापि जठरे पृथिवीं दधानो
ऽप्याश्लिष्य बाहुभिरसौ बहुधाऽस्ति मुग्धः ॥

८. काण्बारारेम्मीशन्—

को वेत्ति मे प्रभुमिमन्तु कथन्नु वेत्ति
श्रीकृष्णमस्य सकलं कबळं जगत्स्यात् ।
स्थानं परं पदमसौ सकलान्तरात्मा
व्याप्नोति सर्वमपि लेशमपि त्वमुञ्चन् ॥

९. एङ्गुमुळन् कण्णन्—

सर्वत्र सन्निहित एव हरिः किलेति
प्राप्ते सुतेऽपि च रुषा स हिरण्यनामा ।
स्तम्भे न हीत्यवददस्य वधाय तत्रो-
द्भूतं नृसिंहमसमं बत ! वेत्ति कोवा ? ॥

१०. शीमैंकोळ् वीडु—

मोक्षप्रदश्च सुरनारकितां च कुर्वन्
देवाद्यशेषजगतामपि धारकोऽसौ ।
यन्ता च बीजमभितो विभुरब्दवर्णः
कृष्णो ममास्ति किल लोचनगोचरोऽद्य ॥

११. कण्डलङ्गळ् शेय्य—

श्रीपुण्डरीकनयनं प्रभुमब्दवर्णम्
स्तोतुं शठारिरवदत्कुरुकापुरीशः ।
साहस्रमुत्तममिदं दशकं च तत्र
ज्ञात्वा भजन्ति परमेच पदे स्वराज्यम् ॥

---



# अथ द्वितीयशतके

## ९. नवमदशकम् ( एम्मावीट्टुत्तिरमुम् )

( अत्र शठारिर्भगवन्तं सम्बोध्य " मम प्रीतये माऽस्तु मे मोक्षः, तवैव प्रीतयेऽस्तु " इति कैङ्कर्य निष्कर्षं करोति । )

१. एम्मा वीट्टुत्तिरमुम्—

तत्ताद्दगुत्तमपदं न हि मोक्षभाग्यं
काङ्क्षे त्वदीयपदपङ्कजयुग्ममेव ।
त्वं मे निधेहि शिरसीह गजार्तिहारिन् !
मे वाञ्छितं हि सकलं त्विदमेव नाथ ! ॥

२. ईदे यानुन्नैक्कोळ्वदु—

मन्नाथ ! नीलमणिवर्ण ! भवन्तमेवं-
मेतावदेव सततं किल हन्त ! याचे ।
त्वत्पादलाभशरणं मम भक्तियोगं
त्वं देहि मे ! न कुरु कालविलम्बमत्र ॥

३. शेय्येल् तीविनैयेन्नु—

मा भूस्तु पापकृदिति स्वयमेव चक्रं
धृत्वा च पाणितलतः कृपया ब्रवीषि ।
हे ! कृष्ण ! नाथ ! तव पादयुगस्तुतौ मे
कण्ठावरोधनविधावपि देहि शक्तिम् ॥

४. एनक्केयाळ्चेय्येक्कालत्तुमेन्नु—

त्वं सन्ततं च मम दास्यरतो भवेति
चित्ते मम स्थिरममुं किल हन्त ! कृष्णम् ।
एतावदेव हि फलं परमन्तु याचे !
त्वं मां विधेहि सततं च तवैव दासम् ॥

५. शिरप्पिल् वीडुशुवर्क्कनरकम्—

देहावसानफलितं किल मुक्तिभाग्यं
स्वर्गादिनारकमपीह भवेत्तथाऽन्यत् ।
नानाजनिं च भगवन्तमजायमानं
नित्यं स्मरन्नहमपारमुदाऽन्वितस्स्याम् ॥

६. मकिल् कोळ् देय्वम्—

देवादिलोकनरलोकजडादिजन्तू-
नुत्पाद्य भास्वरमहाप्रभयाऽन्वितस्त्वम् ।
स्वामिन् ! मनोवचनकर्मसमन्वितं मां
प्राप्य प्रहर्षय समागमतः प्रणम्रम् ॥

७. वारायुन् तिरुप्पादमलर्क्कील्—

त्वां नित्यमेव हृदि मे विनिवेश्य हृद्यं
त्वत्पादपङ्कजमनारतमाश्रितस्सन् ।
धन्यो भवेयमिति मे मतिरस्ति पूर्णं !
त्वं मां वियोजयसि किं ? समुपेहि तूर्णम् ॥

८. एक्कालत्तेन्दैयाय्—

प्राज्ञैस्तु वैदिकवरैर्विमलैर्हि भोज्य-
स्स्वामी भवान् रसघनं मधुरं फलं मे ।
चित्ते सदाऽपि परमो यदि भासि नाथ !
त्वामर्थये न किल जातु चिदन्यमर्थम् ॥

९. यानेयेन्नै यरियकिल्लादे—

नाहन्त्ववेदिषमहो ! मम च स्वरूपं !
सोऽहं ममेदमिति च भ्रमवश्य आसम् ।
श्रीदिव्यसूरिनिवहैरपि सेव्यमान !
स्वामिन् ! ममेदमहमप्यहह ! त्वदीयम् ॥





१०. एरेलेलुम्वैत्र—

सप्तर्षभानपि विजित्य हि दग्धवांस्त्वं
लङ्कापुरं सपदि रम्यतमं च वीरः ।
मां न त्यजेस्त्वमहहोज्ज्वलदिव्यमूर्ते !
क्षिप्रं च सङ्गमय मां तव पादपद्मे ॥

११. विडलिल् शक्करत्तण्णलै—

नित्यापृथक्स्थितसुदर्शननायकं तं
त्यक्तुं न हि क्षम इतीह शठारिसूरिः ।
साहस्रमाह परमं यदुदारभाव-
स्तत्रेदमेव दशकं पठतां हि मुक्तिः ॥

———0———

## अथ द्वितीयशतके

१०. दशमदशकम् ( किळरोळियिळमै )

( तादृशकैङ्कर्यसिद्धये शठारिश्श्रीवनादि ( तिरुमालिरुं-
शोलैमलै ) नाथस्य समाश्रयणमावश्यकमिति
प्रतिपादयति ॥ )

१. किळरोळियिळमै—

प्राग्यौवनस्य विलयात्प्रचितौजसश्श्री-
मायाचरित्रवत एव गृहं प्रभोर्नः ।
नित्यप्रवृद्धतरुषण्डवृतं सुखाय
श्रीमद्वनाद्रितलमाश्रयितुं हि युक्तम् ॥

२. शदिरिळमडवार्—

चातुर्यशालितरुणीजनवश्यतां तु
त्यक्त्वा प्रतिध्वनिविभूषितशङ्खपाणेः ।
श्रीरम्यबाहुभृत एव गृहं सुधांशू-
त्संसोल्लसद्वनगिरिस्थलमेव शस्यम् ॥

३. पयनल्लशेय्दु—

कृत्यं वृथैव वितथं किल चित्त ! वर्ष-
न्मेघायितस्य तु हरेः प्रियसन्निधानम् ।
सम्मोहनैस्तरुगणैश्च समीपशैले
रम्यं शुभं वनगिरेस्स्थलमाश्रितव्यम् ॥

४. करुमवन् पाशम्—

दुष्कर्मपाशसरणिं जगतां निहन्तुं
तन्मुक्तिसिद्धिविधयेऽपि महाचलं यत् ।
सन्धारयन् हरिरिहास्ति तरूपगूढ
मेघावृते वनगिरौ गिरिरेष सेव्यः ॥

५. तिरमुडैवलत्ताल्—

दुष्कृत्यनाशविधये जगतां बलैस्तैः
नानाविधैरुपकरोति हि चक्रपाणिः ।
तेनोषितस्य च वृतस्य शुभैः प्रवाहै-
र्बाह्याचले वनगिरेर्वसतिश्शरण्या ॥

६. किरियेननिनैमिन्—

त्यक्त्वा निहीनमपि कर्म शुभां गतिं तां
सञ्चिन्त्य चात्र तु सवत्समृगीसमेतम् ।
शिक्योपरिष्ठनवनीतभुजस्स्थलं तत्
स्मर्तुं च सद्वनगिरेः कुशलं शरण्यम् ॥



७. नलमेननिनैमिन्—

सञ्चिन्त्यतां शुभमिदं नरकापनुत्त्यै
पूर्वं धरोद्धरणकृद्वसतीह यस्मात् ।
दिव्यां मतिं वितरतीति च शेषभावा-
त्प्राप्तुं वनाद्रिमुचितं तरुषण्डरम्यम् ॥

८. वलम् शेय्दु वैकल्—

सम्प्राप्य चापि बलमत्र वृथैव कालं
नेतुं हि नोचितमहो ! कुवलावहस्य ।
गोपालकस्य वसतिम्सुरबृन्दवन्द्या
दिव्यस्थली वनगिरेस्सततं हि सेव्या ॥

९. वळक्केननिनैमिन्—

प्राप्यं स्वरूपमिति चिन्तयताद्य पापा-
न्युच्छिद्य दुष्टवनितांविनिहन्तुरेतत् ।
दिव्यस्थलं तरुणवारणसेव्यमाढ्यं
प्राप्तुं च सद्वनगिरेस्स्मरणंशरण्यम् ॥

१०. शूदेन्रु कळवुम् शूदुम् शेय्यादे—

द्रव्यार्जनाय विविधं च विहाय चौर्यं
वेदार्थवक्तुरिह सन्निधिमच्युतस्य ।
बर्हिप्रियं विकचसूनमिदं वनाद्रे-
स्स्थानं प्रवेष्टुमुचितं पुरुषार्थरूपम् ॥

११. पोरुळेन्निव्वुलकम्—

भूयाच्च सार्थकमिति स्वयमेव लोक-
स्स्रष्टुर्हरेस्सकलदिव्यगुणान् विशुद्धान् ।
स्तोतुं शठारिरवदच्च सहस्रमेत-
द्दिव्यं कृपाळुचरणौ दशकं नयेद्वः ॥

---

## अथ तृतीयशतके

### १. प्रथमदशकम् ( मुडिच्चोदियाय् )

( श्रीवनगिरिनाथस्य भगवतो दिव्यमङ्गळविग्रहदिव्या–
भरण दिव्यसौन्दर्याद्यनुभवोऽत्र
वर्ण्यते । )

१. मुडिच्चोदियाय्—

ज्योतिस्ते मुखमण्डलस्य किमिदं मौळीन्द्रतेजोमयम् ?
पादाब्जस्य रुचिः किमेतदभवत्पद्मासनं ते हरे ।
रम्या से कटिकान्तिरेव किमियं वस्त्रादिभूषात्मिका ?
श्रीश ! त्वं मम संशयान् परिहर ! त्वं वाच्यवाणीपतिः ॥

२. कट्टुरैक्किल्—

तत्त्वं चेत्परिशील्यते तव परज्योतिर्मयस्याम्बुजं
चक्षुःपादकरैस्समं न ! कनकं शुद्धं न ते वर्ष्मणा ।
औपम्यं जगताऽत्र कल्पितमिदं सर्वं च हीनोपमा
बाभात्येव तव स्तवेषु बहुशस्सत्यं निकर्षावहा ॥

३. परञ्जोदि—

सर्वस्मात्परमो भवान् हि भगवान् ! ज्योतिः परं त्वं हरे !
नास्त्येवोज्ज्वलमन्यदुत्तमगुणं ज्योतिर्विना त्वां क्वचित् ।
सङ्कल्पात्तव सर्वलोकसरणिं सृष्ट्वा स्वयं भ्राजसे !
गोविन्दात्र परं महस्तव गिरा वक्तुं न शक्तिर्मम ॥

४. माट्टादेयाकिलुम्—

विश्वं नाभिसरोजमस्तकमिदं सत्यं विशालं तव
श्रीशस्याम्बुजकोमले वपुषि यच्चित्तं न बध्नात्यहो ! ।
नानादुर्मतसम्प्रविष्टमपि यद्विश्वं तनोषि स्वयं
तस्मात्त्वां तुलसीप्रियं कथमिदं विश्वं समाराधयेत् ? ॥



५. वरुन्दादवरुन्तवत्त—

नैसर्गं हि तपःफलं त्विति महज्ज्योतिः परं ते तनु–
र्ज्ञानं चापि निसर्गसिद्धमपरिच्छिन्नं विभु श्रीहरे !
लोकान् पालयसि स्वयं हि सततं कालत्रयस्थोऽच्युतः
कल्याणानिह ते गुणान् कथमहं कात्स्न्र्येन सङ्कीर्तये ? ॥

६. ओदुवारोत्तेल्लाम्—

वेदा वेदविदां समस्तजगतां सर्वे वदन्त्यंशतः
पूर्णस्यापि गुणांस्तवैव तुलसीमालाकिरीटोज्ज्वल !
पद्मा च स्वयमस्ति नित्यवसतिर्वक्षस्स्थले ते हरे !
शब्दैः कैः कथयाम्यहं कथमहो ! तादृक् च ते वैभवम् ॥

७. वाळ्तुवार्पलराक—

स्तोतारो बहवो भवन्त्विति भवानादौ स्वयं सृष्टवान्
ब्रह्माणं चतुराननं सृज जगन्मूलोदकादित्यहो ! ।
रुद्राद्या अमराश्च दिव्यमतयस्संघीभवन्तस्स्वयं
किं स्तोतुं प्रभवन्ति सद्गुणगणान्नित्योज्ज्वलांस्ते हरे ! ॥

८. माश्शूणाच्चुडरुडम्बाय्—

श्रीकान्तं निरवद्यनिर्मलमहातेजोनिधिं त्वां हरिं
दिव्यज्ञाननिधिं विकाररहितं सर्वाश्रयं सर्वतः ।
देवेशोऽपि चतुर्मुखश्शुभमतिस्स्तोतुं च सज्जो यदि
त्वत्पादाम्बुजयुग्मकान्तिरतुला किं नाप्नुयान्म्लानताम् ? ॥

९. मलुङ्गादवैत्तुदिय—

नित्यामोघसुतीक्ष्णचक्रधर ! ते कैङ्कर्यसक्तं गजं
त्रातुं त्वं गरुडं त्वरातिशयतो रूढस्स्वयं चागतः ।
सङ्कल्पैस्सफलैस्तवात्र जगतां रक्षासु दीक्षाऽस्ति चेत्
किं ज्योतिर्न तिरस्कृतं भवति ते वात्सल्यसीमाम्बुधेः ? ॥

१०. मरैयायनाल्वेदत्तुळ्नित्र—

गूढं वेदचतुष्टयेऽतिगहने ज्योतिः परं त्वं हरे !
पर्यायेण जगत्त्वमेव सकलं सृष्ट्वा स्वयं भक्षयन् ।
उद्गीर्यापि पुनः पदक्रमत एवोन्मातुमासीः प्रभुः !
किं चित्रं यदि सेव्यसे त्वमनिशं रुद्रेन्द्रधात्रादिभिः ॥

११. वियप्पायवियप्पिह्ला—

चित्राणामपि चित्रमेव विशदज्ञानैकवेद्यं हरिं
नत्वा श्रीकुरुकापुरे शठरिपुस्तुष्टाव जिष्ण्वाश्रये ।
साहस्रे दशकं तदेतदपि चोद्घुष्टं समुद्रावृते
चास्मिन् भूमितले समुद्धतिकरं बाभाति जन्मापहम् ॥

---

## अथ तृतीयशतके

### २. द्वितीयदशकम् ( मुन्नीर् ञालम् पडैत्त )

( तादृशानुभवायाशक्ते शठारौ स्वकरणसङ्कोचात् व्या-
मुग्धेसति सर्वेश्वरश्श्रीवनगिरौ सर्वसुलभोऽयं
तवानुभाव्य इति समाधत्ते इति
प्रतिपादयति । )

१. मुन्नीर् ञालम् पडैत्त—

लोकं च त्रिविधाम्बुसंश्रयमिमं सृष्ट्वोपकर्ताऽसि नः
कारुण्याच्च पयोदवर्ण ! यदहं त्वद्दत्तकायानुगः ।
सन्तप्तोऽस्मि ! महार्तिपापसरणिं हत्वा समूलामिमां
त्वां सम्प्राप्य कदा भवामि भगवन् ! धन्यो न वेद्मि स्वयम् ।



२. वन्मा वैयमळन्द—

मातुं त्वं पृथिवीं विशालकठिनां पादाब्जतो वामन-
श्श्रीशाभूः किल ! मायया तव हरे ! नानाविधाज्जन्मतः ।
क्लिन्नोऽहं बत ! दुर्निवारदुरितक्लेशानुबन्धावळी-
मूलच्छेदकरः कदा तव महत्पादाम्बुजं संश्रये ॥

३. कोह्लामाक्कोल्—

नेतुं वाजिगणं हि वेत्रभृदभूस्त्वं शस्त्रहीनोऽवधी-
र्दुष्टान् भारतसङ्गरे ! मम विभो ! त्वं सर्वसेनान्तकः ।
भूम्यामत्र न नंश्यति स्वयमयं दुर्देहबन्धो मम
स्वामिन् ! मे वद साधनं तव महासङ्गाय संरक्षितुः ॥

४. शूळ्च्चिञानच्चुडरोळियाकि—

ज्ञानौज्ज्वल्यमहानिधे ! मम विभो ! सर्वत्र च व्याप्तित-
स्सम्पूर्णोऽसि सदाऽपि चाद्य दयया स्थित्वा मदग्रे वद ।
धन्योऽहन्तु कथं भवेयमनघस्सन्त्यक्तभावान्तर-
स्त्वत्पादाम्बुजयुग्ममात्रशरणश्श्रीमन् ! मुरारे ! हरे ॥

५. वन्दाय्पोलेवन्दुम्—

प्रादुर्भाववशात्समागतममुं चेतो न मे त्वां भजेत् !
त्वत्प्राप्तिर्यदि दुर्लभाऽस्ति सततं चैवं मम श्रीपते ।
कुत्राहन्तु कदाऽऽश्रयेयमतसीगुच्छाळिसच्छायमे-
वैनं त्वां मम नाथमच्युतमहो ! भाग्यं किमीदृङ्मम ॥

६. किर्पन् किल्लेनेन्लिन्—

कृत्याकृत्यविवेकशून्यहृदयश्चासं पुरा सर्वदा
नानादुर्विषयप्रवर्तितमना दूरं गतोऽहं तव ।
सङ्ख्यातीतमनेकजन्तुनिवहं सङ्कल्पमात्राद्भवा-
नुत्पाद्यास्ति परः ! कदा बत ! भजे दिव्यं त्वदङ्घ्रिद्वयम् ॥

७. एज्ञान्ऱुनामिरुन्दिरुन्दु—

हे ! चित्त ! त्वदधीन एव सततं मोहाब्धिमग्नोऽस्म्यहं
दुःखी पापरतो भवाम्बुधिगतः किं मन्दभाग्यस्य मे ।
किञ्चित्साधनमस्ति तस्य परमज्योतिर्मयस्याश्रये
श्रीकृष्णस्य समस्तवस्तुनिवहव्याप्तिप्रतिष्ठाभृतः ॥

८. मेवुतुन्बविनैकळै—

नानादुःखकराघराशिसरणिध्वंसाय यत्नो न मे !
त्वत्पादाम्बुजसन्नतिश्च सततं नैवास्ति मे श्रीपते ।
सौशील्यादिनिधे ! ममापि च विभो ! श्रीकृष्ण ! तेजोनिधे!
पश्येयं तव दिव्यरूपमिति च क्रन्दामि ! कुत्राश्रये ।।

९. कूविक्कूवि—

घोराघाब्धिनिमग्न एव सुचिरं प्रभ्रष्टमार्गस्स्वयं
भ्रान्तोऽहं किल मन्दभाग्य इह हि ! त्वां नाश्रितोऽहं तदा ।
गोपालं जगतां च मानविधये त्रैविक्रमप्रक्रमम् !
क्रन्दन्नेवमनाथवद्भुवि कदा त्वत्सन्निधिं प्राप्नुयाम् ॥

१०. तलैप्पेय्कालम्—

काले चान्तकदूतपाशवितलेस्तद्दुःखशान्त्यै स्वयं
वेदैर्वेद्यमुदारमत्र सुलभं त्वां कृष्णमस्म्याश्रितः ।
मच्चित्तं समभूत्स्थिरं किल ! तदा त्वात्माच मे नित्यतां
सम्प्राप्यैव कृतित्वमुत्तममगादित्येव मे निर्णयः ॥

११. उयिर्कळेल्लावुलकसुम्—

लोकानामपि चात्मनामधिपतिं श्रीशं हरिं कोकिलै-
राक्रान्ते कुरुकापुरे तरुगणैश्चेतोहरे संवसन् ।
स्तोतुं चाह सहस्रसूक्तिसरणिं गेयां शठारिर्मुनि-
स्तत्रेदं दशकं तनोति जगतां मुक्तिं वपुः पाशतः ॥



## अथ तृतीयशतके

### ३. तृतीयदशकम् ( ओलिविल्कालमेल्लाम् )

( श्रीवेङ्कटेश्वरचरण सन्निधौ सकलविधकैङ्कर्यं प्रार्थन मत्र क्रियते । )

१. ओलिविल्कालमेल्लाम्—

सर्वत्र चाखिलदशास्वपि सर्वदाऽपि
प्राप्यात्र किङ्करदशां वयमाश्रयामः ।
गम्भीरनादगिरिनिर्झरवेङ्कटाद्रि-
ज्योतिः परं मम पितुश्च पितामहाख्यम् ॥

२. एन्दै तन्दै तन्दै—

मूलं पितुर्मम पितुश्च पितामहस्य
श्रीशः प्रभुर्लसति नीलपयोदमूर्तिः ।
कल्याणसद्गुणगणाम्बुनिधिस्समस्तै-
र्देवैस्स सूरितिलकैः कृतपुष्पवृष्टिः ॥

३. अण्णल्मायन्—

नाथः किलाद्भुतविचित्रचरित्र एव-
श्रीपुण्डरीकनयनोऽसितरत्नकान्तिः ।
बिम्बाधरोऽत्र विमलाम्भसि वेङ्कटाद्रौ
देवाधिदेव इह भात्यमितप्रभावः ॥

४. ईशन् वानवर्क्कु—

देवाधिदेव इति चेदहमद्य वच्मि
श्रीशस्य किं तदुचितं महिमातिसीम्नः ।
तेजोनिधेर्मयि च वेङ्कटनायकस्य
प्रेम्णाऽतिमोहितमतेरतिनीचवृत्ते ? ॥

५. ओदियाकि—

ज्योतिर्मयं सकललोकसमाश्रितं चा-
प्यादिं च सर्वजगतां यदि वच्मि मूर्तिम् ।
वेदान्तसारममृतं किमहं स्तवीमि
श्रीवेङ्कटेशमनघं शुभसद्गुणाब्धिम् ॥

६. वेङ्कडङ्गल्—

श्रीवेङ्कटाद्रिपतये नम इत्यपीदं
मन्त्रं च जप्यमिह बिभ्रति ये महान्तः ।
तेषां मृणानि सकलानि हतानि हि स्युः !
पापानि चेति किल ! तेऽत्र विशुद्धवृत्ताः ॥

७. शुमन्दुमामलर्—

सन्धार्य दिव्यकुसुमानि जलं च दीपं
धूपं च भक्तिभरितास्तु भजन्ति देवाः ।
सूरीन्द्रवर्यसहिता इह ! वेङ्कटाद्रि-
स्सोऽयं ददाति किल नः परमं च साम्यम् ॥

८. कुन्रमेन्दिक्कुलिर् मलै—

उद्धृत्य चाद्रिमपि रक्षति शीतवर्षा-
द्विक्रान्तसर्वभुवनस्स्म परात्परोऽसौ ।
स्वामी विचित्य तमिमं किल वेङ्कटाद्रिं
प्राप्तोऽयमेत्र गिरिरस्मदघप्रहन्ता ॥

९. ओयुमूप्पु—

नश्यन्ति वार्धकजराजननं मृतिश्च
श्रीशस्य वेङ्कटपतेश्चरणारविन्दम् ।
संसारतापहरणस्य वहन्ति वाचा
चित्तेन चापि किल ये जगतीह तेषाम् ॥



१०. वैत्तनाळ्वरै—

क्लेशेषु हन्त ! दिवसेष्ववसानकाले
सर्वेन्द्रियप्रळयतश्च पुरा भजध्वम् ।
श्रीशेषशायिवरवेङ्कटसानुदेशं
रम्यैर्विशालमिह वृक्षगणैः प्रसूनैः ॥

११. ताळ्परप्पि—

विस्तीर्य पादतलमप्यवनीं प्रमातु-
श्श्रीवेङ्कटाचलपतेश्शठकोपनाम्ना ।
स्तोत्रा कृते विदुरिदं दशकं सहस्रे
ये ते तु यान्ति पदवीं भुवनप्रशस्ताम् ॥

## अथ तृतीयशतके

४. चतुर्थदशकम् (पुकलुनल्लोरुवनेन्गो)

( तादृशकैङ्कर्यकरणायाऽशक्तश्शठारिरत्र वाचिककैङ्कर्यमेव करोति । )

१. पुकलुनल्लोरुवनेन्गो—

स्तव्योऽयं परमोऽद्वितीय इति किं वच्मि ? स्वयं धारिणी
सेयं निस्समवैभवेति किमहो ? वारान्निधिश्शीतलः ।;
किं वाऽयं दहनोऽनिलः ? किमु नभस्सर्वत्रगं ? किं दिवि
ज्योतिर्द्वन्द्वमुताखिलं च तदिदं किं वेति कृष्णं ब्रुवे ? ॥

२. कूवुमाररियमाट्टेन्—

स्तोतुं नैव हि शक्नुयां मम विभुं कृष्णं सरोजाम्बकं !
किं वाऽमी गिरयः ? किमेतदखिलं वर्षं च सञ्जीवनम् ।
भास्वत्तारकमालिका किमथवा वेद्याः कलाश्चाखिलाः ;
किं ज्ञानाश्रयवाच्यराशिरथवा नैवास्मि वक्तुं प्रभुः ॥

३. पङ्गयक्कण्णनेन्गो—

किं बाऽयं वरपुण्डरीकनयनः? किं वा प्रवाळाधरः ?
किं वा रम्यलसत्पदाम्बुजयुगः ? किं नीलवर्णोऽच्युतः? ।
किं वाऽत्युज्ज्वलदिव्यमौळिरुरसि श्रीवत्सचिह्नाङ्कितः ?
किं माणिक्यमिदं वदामि विमलं श्रीशङ्खचक्रोज्ज्वलम् ॥

४. शादिमाणिक्कमेन्गौ—

किं माणिक्यमहो ! वदामि ? किमहो ! भास्वत्सुवर्णं च तं ?
मुक्ताराशिमुत ब्रवीमि ? विमलं वज्रं ? प्रदीपं शुभम् ?
आद्यं ज्योतिरुदाहरामि पुरुषं किं वा पुराणं परं ?
मन्नाथं हरिमच्युतं तममलं संहारकालस्थितम् ॥

५. अच्चुतनमलनेन्गो—

किं वाऽयं त्वमलोऽच्युतश्श्रितजनक्लेशापहः किं हरिः ?
किं विश्वस्तमहौषधं ? किमु सुधावाराशिसारामृतम् ? ।
किं वा तं मधुरं ब्रुवे रसघनं ? किं षड्रसं वेदनं
किं वेदं मधु साज्यमेव ? किमहो ! पक्वं फलं वा पयः ॥

६. पालेन्गोनान्गुवेदप्पयनेन्गो—

शाखारूपमिदं चतुश्श्रुतिफलं किं नीतिसूत्रात्मकं ?
किं सङ्गीतमिदं मनोरममुत श्रेष्ठं च सर्वेष्वपि ।
सर्वातीतमिदं फलं किमसमं ? कृष्णं ब्रुवेऽहं पतिं
मायाचेष्टितमादिपूरुषमिमं देवाधिदेवं हरिम् ॥

७. वानवरादियेन्गो—

देवानामपि मूलमेव किमिमं तेषां च पूज्यं ब्रुवे
किं तेषामपि भोगमेव च फलं ! तेषां च किं रक्षणम् ।
किंवैश्वर्यमनश्वरं च कलये ! किं स्वर्गलोकं स्थिरं !
नित्यासङ्कुचितं च मोक्षमथवा माणिक्यवर्णं ब्रुवे ॥



८. ओळिमणिवण्णनेन्गो—

लोकानामपि रक्षणाच्च मुदितं सृष्टैश्च तैस्संस्तुतं
कृष्णं मे प्रभुमेव मायिनमिमं दिव्यं हरिं स्रग्विणम् ।
किं वाऽहं मणिवर्णमुज्ज्वलमहो वच्मि स्वयं स्तव्यमे-
वाहोस्विज्जटिनं हिमांशुशिरसं ! किं वा विरिञ्चं ब्रुवे ॥

९. कण्णनैमायनूतन्नै—

सर्वाचेतनचेतनात्मकमिमं कृष्णन्तु मायामयं
हृत्वाऽम्भोनिधिमन्थनादमृतमेवास्मद्विभुं चाच्युतम् ।
स्तुत्वाऽनन्तमनन्तशायिनमहं लोकान् गिळन्तं पुन-
र्वात्सल्यादपि चोद्गिरन्तमधुना मातुं न वै शक्नुयाम् ॥

१०. यावैयुम् यवरुम् तानाय्—

सर्वाचेतनचेतनात्मकतयाऽप्यस्पृष्ट एव स्वयं
तत्तद्दोषगणैस्तदिन्द्रियगणातीतश्च मूर्तिमतेः ।
देहे जीव इव स्वयन्तु विमलस्सत्यं च नित्यं हरि-
स्तत्सम्भावितमेव चेत्तु तदिदं चास्त्येव सम्भावितम् ॥

११. कूडिवण्डैयुम्—

भृङ्गोपेतसुमस्रजं हरिमिमं नीलाब्दवर्णं स्तुवन्
साहस्रं कुरुकेश्वरश्शठरिपुर्भव्यं त्वकार्षीच्छुभम् ।
तत्रेदं दशकं पठन्ति भुवि ये ते नित्यसूरिप्रियाः
नित्यं स्युः परमे पदे भगवतो नित्यानुभूत्या स्वयम् ॥

---

## अथ तृतीयशतके

### ५. पञ्चमदशकम् (मोय्माप्पूम्पोलिल् )

( अत्र भगवत्कैङ्कर्यनिरतानां प्रशंसनं, तदितरेषां निन्दनं च क्रियते । )

१. मोय्माप्पूम्पोलिल्—

रम्याम्भोजतटाकमध्यकलितं नक्रावृतं हस्तिनं
त्रातुः कालपयोदवर्णसरुचः कृष्णस्य नाथस्य नः ।
स्तोत्रं नैव चरन्ति ये न च मुदा नृत्यन्ति ये सम्भ्रमात्
किं तेषां बत ! जीवितात् ? किमु फलं ब्रूताद्य भौमा नराः ॥

२. तण्कडल्वट्टत्तुळ्ळारै—

वाराश्यावृतभूतलस्थमनुजप्राणान्तकांश्चासुरान्
पापिष्ठान् बलवीर्यशौर्यभरितान् हन्तुं कृताविर्भवम् ।
श्रीकान्तं भुवि दिव्यगीतपठनैर्ये न स्तुवन्ति स्वयं
चोत्प्लुत्यापि चरन्ति नैव किल ते पापाः पतन्त्यप्यधः ॥

३. मलैयैयेडुत्तु—

गोसङ्घान् परिरक्षितुं गिरिधरं नाथं शिलावर्षतः
स्तावंस्तावमनारतं भुवि शिरो विन्यस्य चोर्ध्वाङ्घ्रयः ।
सम्भ्रान्ता न भवन्ति ये बत ! महाघोरार्तिकृन्नारके
ते सत्यं हि पतन्ति हन्त ! सततं क्लेशाकुलास्स्युः खलाः ॥

४. वम्बविऴ्कोदैपोरुट्टा—

नीळादेव्यनुभूतये भुवि महासप्तर्षभध्वंसिनं
स्तुत्वा शीलगुणान्वितं मुरहरं बिम्बाधरं श्रीधरम् ।
नृत्यन्त्येव न चाक्रमाद्भुवि विपर्यस्तस्वमस्तास्तु ये
तेषां सम्भवतः फलं किमु भवेत्सन्मण्डले भूतले ? ॥



५. सादुशनत्तैनलियुम् कञ्जनैच्चाशिप्पदर्क्कु—

साधूनामपि चार्तिसन्ततिकरं कंसं निहन्तुं परं
ज्योतिश्चाद्यमुदारमाविरभवत्तत्रैव चात्रापि यत् ।
वेदानामपि चादिकारणमिदं तत्त्वं स्तुवन्तस्सदा
ये वीथीषु चरन्ति नैष किमु ते प्राज्ञाग्रतो जापकाः ॥

६. मनिशरुम् मत्तुम् मुत्तुमाय्—

मानुष्यात्सुरतिर्यगादिवपुषा मायातनुं निस्समं
जातं चाप्यजमुत्तमाम्बुधिशयं नाथं च रुच्यं फलम् ।
माधुर्येक्षुरसं घनं मधुसुधासारं हरिं निर्मदा-
स्स्तुत्वा सम्भ्रमनृत्त सक्तहृदयाः प्राज्ञास्सुशीलान्विताः ॥

७. नीमैयिल्नूत्तुवर्वीय—

दुश्शीलात्मशतान्तकं च कृपया पञ्चात्मनां पालकं
बन्धुं सर्वचमूविनाशमसमं ज्योतिः परं श्रीधरम् ।
स्मृत्वा नृत्तरतास्सबाष्पनयना नैवार्द्रचित्ताश्च ये
मेदोवृद्धिकरैस्सदोदरभरैः किं स्यात्फलं तैस्सताम् ॥

८. वार्पुनलम् तण्णरुवि—

रम्याद्रीत्तरवेङ्कटाचलपतिं नाम्नां सहस्रैस्स्वयं
स्तुत्वा चाक्रमतश्चरन्ति नगरे ये कानने वा जनाः ।
उन्मत्ता इव नृत्तसक्तहृदया लोकैः परीहास्यता
प्राप्तास्ते हि भवन्ति दिव्यनिलयैस्सेव्यास्स्वयं सूरिभिः ॥

९. अमरर्तोळप्पडुवानै—

दिव्यैस्सूरिवरैश्च सेव्यमखिलभ्राजज्जगन्नायकं
योगध्यानपरा विधाय हृदये ये सन्ति सायुज्यगाः ।
तानेतांस्तु विना समस्तजगतां कर्तव्यमेवानिशं
श्रीशप्रातिकृते हि नर्तनमिहोत्प्लुत्याप्यहो ! धावनम् ॥

१०. करुमसुम् करुमपलनुम्—

कर्माण्येव च सर्वकर्मफलमप्येषोऽयमाद्यं स्वयं
सर्वेषामपि कारणं च विलसन्माणिक्यवर्णो हरिः ।
पद्माक्षं हृदि देवदेवमिममेवाराध्य नृत्तादिभि-
र्निर्लज्जा विहरन्तु भक्तिभरिताश्शंसन्तु तं चाक्रमात् ॥

११. तीर्न्दवडियवर्तम्मै—

दास्ये भक्तगणान्नियोज्य सकलैः पूर्णं गुणैरच्युतं
देवानामधिदेवमीश्वरमयं श्रीशं शठारिर्मुनिः ।
अस्तावीत्कुरुकापुरस्य विलसत्सस्यावृतस्य प्रभु-
स्साहस्रे दशकं तदेतदखिलं हन्यान्महापातकम् ॥

———0———

## अथ तृतीयशतके

६. षष्ठदशकम् ( शेय्यतामरैक्कण्णनाय् )

[ परव्यूह विभवान्तर्याम्यवतारापेक्षया अर्चावतारस्य
सौलभ्यमुच्यते । ]

१. शेय्यतामरैक्कण्णनाय्—

पद्माक्षः परमं महः किल हरिस्सप्तापि लोकानयं
भुञ्जानः परमोऽद्वितीयविभवो मूर्तित्रयं च स्वयम् ।
रोदस्यौ मनुजास्सुरास्तदितरे चान्येऽपि चान्येऽपि चा-
प्यन्ये चेति समस्तकारणमभूज्ज्ञानं जगत्सर्गकृत् ॥

२. मूवरागियमूर्तियै—

यो मूर्तित्रयरूप एव परमं मूलं त्रयस्यापि त-
च्छापघ्नश्च महोदधौ च शयितो देवाधिदेवोऽच्युतः ।
लङ्काध्वंसकरं तमेव शरणं कोदण्डपाणिं हरिं
पद्माक्षं कलुषापहं भजत भो लोकास्स्तवैर्भक्तितः ॥



३. परविवानवरेत्तनिन्र—

देवैस्स्तव्यमहागुणं च परमं ज्योतिः परं तं हरिं
रासक्रीडितमच्युतं मणिनिभं कुम्भादिलीलाधरम् ।
कृष्णं शेषशयं प्रभुं च जगतीरक्षार्थनिद्राधरम्
स्तोतुं यूयमहर्निशं च सततं सक्तास्स्थ चित्ते निजे ॥

४. वैम्मिन्नुम्मनत्तेत्रु—

युष्माकं मनसि स्वयं कुरुत तन्माहात्म्यमन्यादृशं
मायाचेष्टितभास्वरस्य तु हरेरित्येव किं मादृशैः ।
वक्तव्यं भवतीदमस्तु तदिदं ! ब्रह्मेन्द्ररुद्रादयो
देवाश्च प्रणताः पदाब्जयुगळे शंसन्ति चैनं सदा ॥

५. तिरियुमूकात्तोडु—

आविर्भाव इहाच्युतस्य तु विभोः कृष्णस्य नीलाम्बुद-
श्यामस्याम्बुजलोचनस्य दिविषत्सेव्यः किरीटोज्ज्वलः ।
वाय्वाकाशधरार्णवाग्निरविचन्द्राद्याश्च देवास्स्वयं
भौमा मानुषतिर्यगादिजडवस्त्वाद्यं च सर्वं भवेत् ॥

६. तोत्तक्केडवैयिल्लवन्—

आविर्भूय च जन्मनाशरहितो भात्यद्वितीयो हरि-
र्मूर्तिश्श्रीनृहरिः क्रुधाकुलमतिर्भक्ताश्रिताङ्घ्रिद्वयः ।
वात्सल्यादनुरक्तलोचनमिमं सूरीन्द्रसेव्यं भजे !
नान्यं जातु हि गन्धरूपरसवाक्स्पर्शात्मकं तं विना ॥

७. एळुमैक्कुमेनदाविक्कुम्—

माधुर्यामृतमात्मनो मम सदा भास्वान् मया सङ्गतो
ज्योतिश्श्रीमणिवर्ण एष सततं कुम्भादिलीलापरः ।
भोज्यं सूरिवरैश्च मौनिनिवहैर्दिव्यं फलं श्रीधरं
यूयं संश्रयताद्य शुद्धमनसस्सर्वाघशान्तिर्भवेत् ॥

८. तुयरमे तरुतुम्बविन्बविनैकळाय्—

सर्वेषां सुखदुःखकारणमहाकर्मावळीशासिता
तत्संस्पर्शविवर्जितश्च परमो ज्योतिः परं शाश्वतम् ।
भुङ्क्ते चोद्गिरति स्वयं यमभटध्वंसी च लोकान् हरि-
श्श्रीशं दाशरथिं विनाच्युतमिमं नान्यं शरण्यं भजे ॥

९. तन्नमाकिय तन्दैतायोडु—

माता चापि पिता स्वयं हितपरस्त्वन्योऽपि बन्ध्वात्मक
स्सूरीणामपि चाग्रणीस्त्रिविधमूर्त्यादिश्च यश्श्रीधरः ।
तं तादृक् स्वयमीदृगित्यपि भिया मा संशयं मानवा
लोकेऽस्मिन् कुरुत ! स्मृतस्तु भगवान् गम्भीर एवाब्धिवत् ॥

१०. कडल्वण्णन् कण्णन् विण्णवर्करुमाणिक्कम्—

सूरीणां मणिरत्नमुत्तमगुणं श्रीशेषशायी परं
ज्योतिश्चापि गुणाम्बुधिर्मम हरिः कृष्णोऽस्ति वै धारकः ॥
पूर्वं यश्शतवीरसैन्यमखिलं हन्तुं स्वयं रक्षितुं
पश्चाज्जौ निरतोऽस्य सारथिविभोः पश्यानि पादौ कदा ?

११. कण्कळ्काण्डर्करियनाय्—

अक्षिद्वन्द्वपरोक्षमेव मनसस्साक्षात्पदं शीलतः
पृथ्व्यां प्राणिततेः कृपाजलनिधिं सूरीन्द्रनाथं हरिम् ।
स्तोतुं श्रीकुरुकेश्वरश्शठरिपुस्साहस्रमेवाकरो-
त्तत्रेदं दशकं तनोति परमां भक्तिं ! जनैः पठ्यताम् ॥

———०———



## अथ तृतीयशतके

### ७. सप्तमदशकम् ( पयिलुम् शुडरोळि )

( भगवत्कैङ्कर्यनिरता भागवता अस्माकं स्वामिन इति भागवतशेषत्वमुच्यते । )

१. पयिलुम् शुडरोळि—

ज्योतिस्तत्परमं सरोजनयनं क्षीराम्बुधौ शायिनं
भक्तार्थं हरिमच्युतं श्रितवतां भाग्यं हि भोग्यं परम् ।
ये केचिच्च भजन्ति ते हि सततं सेव्या भवन्त्येव नः
प्राप्यास्सर्वजनिष्वपीह परमास्ते सन्ति नश्शेषिणः ॥

२. आलुम् परमनैक्कण्णनै—

सेव्यत्वे परमं च सर्वसुलभं कृष्णं च चक्रान्वितं
विष्णुं दिव्यचतुर्भुजं मणिनिभं नाथं च नश्श्रीधरम् ।
सेवन्ते भुवि ये कृताञ्जलिपुटास्साष्टाङ्गमेते सदा
ऽप्यस्माकं प्रतिजन्म सेव्यविभवा नाथा हरेस्सुप्रियाः ॥

३. नादनैञालमुम् वानमुमेत्तुम्—

नाथं भौमगणैश्च सूरिनिवहैस्स्तव्यं तुलस्याऽञ्चितं
दीव्यद्दिव्यसुदर्शनं मम विभुं पादावनम्रास्तु ये ।
सेवन्ते सततं च ते हि परमाश्शास्त्रोक्तरीत्या स्वयं
पूज्यास्सर्वजनिष्वपि प्रियतमा अस्माकमार्यास्सदा ॥

४. उडैयार्न्दवाडैयन्—

श्रीनारायणमुत्तरीयवसनं भूषान्वितं कण्ठिका-
काञ्चीदामसुवर्णमौळिविलसद्यज्ञोपवीताञ्चितम् ।
सेवन्ते सततं च ये भुवि हरिं भक्ताश्च तेषां सदा
ऽप्यस्माकं परमाश्च सर्वजनिषु प्राप्याश्च सेव्यास्स्वयम् ॥

५. पेरुमक्कुळ्ळवर तम् पेरुमानै—

नाथं सूरिवराधिपं सुरगणान् पूर्णामृतप्राशना-
द्रक्षित्वाऽप्युपकारिणं बहुतमां शंसन्ति ये त्वक्रमात् ।
तेषां स्तोत्रपरायणाः किल भवन्त्यस्माकमार्या भुवि
प्राज्ञास्सेव्यतमास्तथा दिवि च ते ह्युज्जीवयन्त्येव नः ॥

६. अळिक्कुम् परमनैक्कण्णनै—

दातारं परमं हरिं यदुपतिं कृष्णं च चक्राञ्चितं
सौगन्ध्याद्रसुमस्रजं मणिनिभं नाथं च मे श्रीधरम् ।
ज्योतिस्तत्परमुज्ज्वलं हृदि तु ये कुर्वन्ति नित्यं च ते
सत्यं नः परिपालयन्ति सततं चाजन्मजन्मान्तरम् ॥

७. शन्मशन्मान्तरम् कात्तडियारकळै—

नानाजन्मसु भक्तवर्गसरणिं नीत्वा च साक्षात्कृतिं
दत्वा स्वाङ्घ्रिसरोजयुग्मपदवीसेवां च कृत्वा स्वयम् ।
रक्षन्तं प्रभुमच्युतं स्तुतिपराश्शंसन्ति ये तत्स्तुतिं
कुर्वन्तः किल नश्चिरं प्रभुवरा विश्वासपात्रं परम् ॥

८. नम्बनैञालम् पडैत्तवनै—

पूर्णं चाखिलविश्वसृष्टिनिरतं श्रीवत्सवक्षस्स्थलं
देवानामपि दुर्गमं मतिमतां शंसन्ति चेन्नारके ।
ये केचित्किल तेऽपि जन्मसरणिष्वस्माकमीशास्स्वयं
सेव्या एव हि सत्यमेतदिति मे दिव्यं मतं पावनम् ॥

९. कुलम् ताङ्गु शातिकळ् नालिलुम्—

चातुर्वर्ण्यकुलापकृष्टचरिताश्चण्डालचण्डालका-
श्चापि श्रीहरिमच्युतं मणिनिभं चक्रान्वितं संश्रिताः ।
कैङ्कर्येषु रताश्च ये भुवि जनास्तेषां च दासात्मनां
दासास्स्युः परमाश्च शेषिविभवा अस्माकमार्यास्सदा ॥



१०. अडियार्न्दवैयमुण्डु—

पादाक्रान्तजगत्ततिं च सकलां भुक्त्वा स्वयं तद्दशा-
द्बालं तं वटपत्रशायिनमपि श्रीशं हरिं निस्समम् ।
अस्माकं प्रभुमाश्रिता भुवि च ये तद्दासदासानुगा-
स्तद्दासाश्च तदीयदास्यनिरता नित्यं च नाथा हि नः ॥

११. अडियोङ्गनूत्तुवर्वीय—

दृप्यद्दुष्टशतं विनाश्य च तदा पञ्चाश्रितानां दया-
सिन्धुं बन्धुमुदारसद्गुणनिधिं स्तोतुं शठारिर्हरिम् ।
चक्रे श्रीकुरुकेश्वरः कृतिततिं साहस्रपद्यावळिं !
तत्रेदं दशकं तदीयपरमभ्यस्याश्रिता मोक्षगाः ॥

## अथ तृतीयशतके

### ८. अष्टमदशकम् [मुडियाने]

( भगवद्गुणानुभव एकैकमपीन्द्रियं सर्वेन्द्रियकृत्यानि कर्तुमिच्छतीति प्रतिपाद्यते । )

१. मुडियाने—

श्रीदिव्यमौळिधर ! सेव्य जगत्त्रयस्य !
स्तव्याङ्घ्रिपङ्कज ! पयोनिधिमन्थनोऽसि ।
तार्क्ष्यध्वजासितपयोधरवर्ण चित्तं
सूरीन्द्रनाथ ! परमेति ममास्ति मुग्धम् ॥

२. नेडुमे नीळ् नगराक—

जिह्वा हि वक्ति मम सन्ततमन्तरङ्गे
वासिन् ! पुरे मम शरण्य दयापरेति ।
लङ्केश्वरप्रमथनेति जगत्त्रयस्यां-
प्याक्रान्तिकृत्यचण ! वञ्चक वामनेति ॥

३. वाशकमेयेत्त—

जिह्वाप्रचोदक ! दयापर ! सूरिसेव्य !
नव्येन्दुभास्वर ! हरे नवनीतचोर ।
गोपेश्वरेति सततं च तवैव विष्णो!
मत्पाणियुग्ममिह मार्गणकृत्यसक्तम् ॥

४. कैक्कालारत्तोळुदु—

पाणिद्वयेन सततं तव पादसेवां
कृत्वा क्षणादपि वियोगसहं न भाति ।
त्वामेव शेषशयनानिशमीक्षितुं मे
नेत्रद्वयं परम काङ्क्षत एव सत्यम् ॥

५. कण्कळाल्काणवरुङ्गोल्—

द्रष्टुं च लोचनयुगेन किमस्ति शक्ति-
रित्येव वामनमिहावनियाचकं त्वाम् ।
आरोह्य हृष्टविनतासुतपक्षघोषं
श्रोत्रद्वयं मम सदाऽपि च काङ्क्षते हि ॥

६. शेविकळालार निन् कीर्तिक्कनियेन्नुम्—

श्रोत्रेन्द्रियेण तव कीर्तिफलं सुपक्वं
दिव्यामृतं कविवरार्जितमेव भोक्तुम् ।
त्वामेव दिव्यकनकोज्ज्वलचक्रपाणिम्
पृथ्व्यां समाश्रयत एव सदा ममात्मा ॥

७. आवियेआरमुदे—

मत्प्राणभूत परिपूर्णरसामृत त्व-
त्सौन्दर्यमेव गरुडध्वज चक्रपाणे ।
पापी स्वमानसमनोरथवाक्यघोषै-
रुद्घोषयन्नपि न दृष्टिवशं भजेऽत्र ॥



८. कोलमे तामरैक्कण्णदोरञ्जननीलमे—

सौन्दर्यविग्रह ! सरोरुहनेत्रयुग्म !
नीलाञ्जनाभ ! मम धारकशीलमूर्ते ।
भूतं भविष्यमपि चाद्यतनं भवन्तं
पश्यामि कुत्र च कदेति विचिन्तयामि ॥

९. कोळ्वन् नान् मावलि मूवडिता—

याचे पदत्रयतलं हि महाबले त्वं
देहीति वञ्चक ! वटो खलकंसनाशिन् ।
बाणासुरस्य दृढबाहुसहस्रभेदिन् !
प्राप्स्ये कदा गरुडवाहन ! माधव त्वाम् ॥

१०. पोरुन्दियमामरुदिनिडैपोय—

संवृद्धयमलार्जुनभञ्जक ! त्वं
नाथोऽसि मे! पदयुगं ननु ते दिदृक्षुः ।
खिन्नोऽहमच्युत ! तव स्तुतिमालिकान्तु
प्राप्योत्सुकोऽस्मि समयं च कियन्तमेवम् ॥

११. पुलम्बुशीर्पूमियळन्दपेरुमानै—

स्तव्यं त्रिविक्रममुदारगुणं महात्मा
स्तोतुं मुनिस्तु कुरुकाधिपतिश्शठारिः ।
साहस्रमाहं परमं दशकं तदेत-
द्धन्याः पठन्ति यदि यान्ति परं पदं तत् ॥

---

## अथ तृतीयशतके

### ९. नवमदशकम् ( शोन्नाल् विरोदमिदु )

( अत्र श्रीशठारिर्लौकिकान् प्रत्युपदिशति इतरस्तोत्रवैफल्यं
श्रीपतिस्तोत्रसाफल्यञ्च विस्तरेण । )

१. शोन्नाल् विरोदमिदु—

उक्तं चेत्तदिदं विरुद्धमिह वस्सत्यं तथाप्युच्यते
यूयं संशृणुताद्य! भृङ्गविहृतेर्झङ्कारशब्दान्विते ।
शेषाद्रौ मम लालनीयविषयस्स्वामी मम स्तव्यतां
प्राप्याऽऽस्ते ! रसनाभिरामकवितां दद्यां न मेऽन्येष्वहम् ॥

२. उळनाकवेयेण्णित्तन्नैयोन्नाक—

किं वा स्यात्फलमत्र मानुषतते स्स्तोत्रेण या भूतले
सत्तां स्वामभिनन्द्य फल्गुधनमप्यास्ते च मत्ता वृथा ।
तीर्थैस्सस्यसमृद्धिभिः परिवृते रम्ये कुरुङ्गापुरे
भास्वन्तं कुलनायकं मम विभुं सर्वेश्वरं तं विना ॥

३. ओळिवोनिह्लादपल्लूळिदोरूळि—

नित्यं सन्ततकिङ्करत्वविभवं भोग्यं परं पावनं
भक्तेभ्यो वितरन्तमच्युतममुं सूरीन्द्रनाथं विना ।
अन्यत्र स्वयमद्य यूयमहह ! ! श्लाघ्याः कवीन्द्रा अपि
श्रान्ताः क्षुद्रनरस्तुतौ हि निरताः किं स्यात्फलं वस्ततः ? ॥

४. एन्नावदेत्तनैनाळैक्कुप्पोदुम्—

प्राज्ञाः ! किं फलमद्य हे ! कविवरास्स्तुत्वा नरानस्थिरान्
प्राप्यं वः ? किमिदं चिराय भवतां भोग्यं भवेदल्पकम् ।
भास्वद्रत्नकिरीटमच्युतममुं सूरीन्द्रनाथं हरिं
स्तुत्वा स्याद्भवतामनन्यसुलभं मुक्तेः पदं शाश्वतम् ॥



५. कोळ्ळुम् पयनिल्लै—

प्राप्यं नैव हि किञ्चिदस्ति भवतां प्राज्ञाः कवीन्द्रा वृथा
स्तुत्वा क्षुद्रधनाश्रयानिह नरान् मिथ्याऽप्युदारानिव ।
स्तव्यं पूर्णगुणं त्वभीष्टवरदं निर्दोषमेवाच्युतं
नित्यौदार्यनिधिं हरिं मणिनिभं स्तोतुं समागच्छत ॥

६. वम्मिन् पुलवीर् नुम्मेय्वरुत्ति—

आयातार्याः कवीन्द्राः करकृतिततिभिर्देहयात्रां कुरुध्वं !
लोकेऽस्मिन्नद्य नैव प्रभुवरधनिकास्सन्ति दृष्टं तदेतत् ।
युष्माकं सत्कवित्वं त्वभिमतविषये देववृन्दे प्रयुक्तं
सर्वं स्तोत्रं भवेन्मे मणिमकुटभृतश्श्रीपतेरेव सत्यम् ॥

७. शेरुङ्कोडै पुकळेल्लैयिलानै—

दाने चाप्रतिमं महागुणनिधिं निस्सीममेवाच्युतं
देवं नामसहस्रयुक्तमतुलं विष्णुं विनाऽन्यान् भुवि ।
क्षुद्रान् दानपराः पयोदसदृशा हस्ताश्च वो बाहवो-
ऽप्येते पर्वतसन्निभा इति भृशं मिथ्यावचो न ब्रुवे ॥

८. वैयिन्मलिपुरैतोळि—

नीळायाः पतिमच्युतं सुविलसद्बाहोर्गुणानां गणै-
स्स्तुत्वाऽनन्तशतैश्चिराय बहुधा मे देहयात्रां चरन् ।
तत्पादाम्बुजसंश्रयोत्सुकतमः किं क्षुद्रमर्त्यान् भुवि
स्तोतुं मे वचसा ब्रवीमि किमपि प्राज्ञोऽद्य मायावशात् ॥

९. वायूकोण्डुमानिडम् पाडवन्द—

नाहं मानुषवर्गशंसनपरो वाचा कविश्श्रीधरं
वेदान्तप्रतिपाद्यवैभवमुदाराग्र्यं प्रभुं चक्रिणम् ।
संश्रित्यास्मि कृती ! स एव परमो ज्योतिर्मयो यस्तु मा-
मर्चामूर्तिपरात्पराद्यनुभवैर्मुक्तं करोत्यच्युतः ॥

१०. निन्र् निन्र् पलनाळुम्यक्कुम्—

पार्श्वे तिष्ठति नित्यमेव हि नृणां देहात्ययेऽपि स्वयं
तेषां भात्यनुगः प्रभुस्स्ववशगान् कर्तुं सदा तान् हरिः ।
हर्तुं जन्मपरम्परान्तु जगतां स्रष्टुः किलाहं कवि-
स्तस्यैव स्तुतये सदा ! किमुचिता भूयान्ममान्यस्तुतिः ॥

११. एर्कुम् पेरुम्पुकळ्—

नित्योदारगुणोज्ज्वलं मुररिपुं सूरीन्द्रनाथं हरिं
कृष्णं स्तोतुमुदारसद्गुणनिधिः प्राज्ञश्शठारिर्मुनिः ।
रम्यं श्रीकुरुकेश्वरश्शुभगुणं साहस्रमेवाकरो-
त्तत्रेदं दशकं भुवीह पठतां जन्मैव न स्यान्नृणाम् ॥

---

## अथ तृतीयशतकं

### १० दशमदशकम् (शन्मम् पलपलशेय्दु)

( इतरस्तुतिव्यापृतान् भग्नाशयान् दृष्ट्वा शठारिस्स्वस्य सर्वे-
श्वरस्तुत्या सर्वाभीष्टसिद्धिरासीदिति
प्रतिपादयति । )

१. शन्मम् पलपलशेय्दु—

नानाजन्मसु जन्मभागिह भुवि प्रादुर्भवन् माधव-
श्शङ्खं चक्रमपि स्वशार्ङ्गमुसलौ श्रीनन्दकं तां गदाम् ।
बिभ्रद्गारुडवाहनोऽसुरगणान् रक्षोगणान् मर्दयन्
युद्धे भाति च भक्तवत्सल इमं स्तुत्वाऽस्मि पूर्णाशयः ॥



२. कुरैविल् तडङ्कडल्—

पूर्णाम्भोधितलेऽस्ति शेषशयनः पद्माम्बकस्सुन्दर-
श्श्रीमान् योगपतिर्हरिर्मणिनिभः कृष्णश्च तार्क्ष्यध्वजः ।
प्रध्वंस्यासुरवर्गमुत्तमगुणस्सर्वेश्वरो भात्ययं !
स्तुत्वैनं परिगाननृत्तसहितः पूर्णोऽस्म्यहं सन्ततम् ॥

३. मुट्टिल्पल्पोकत्तोरु तनिनायकन्—

त्रैलोक्याधिपतिं च भोगभरितं सर्वेश्वरं श्रीनिधिं
माधुर्याब्धिरसं घनं मधुरसं क्षीरं फलं चोत्तमम् ।
दिव्यं चामृतमिक्षुमेव तुलसीभास्वत्किरीटं हरिं
नत्वा तत्प्रवणाशयोऽनिशमहं ! चित्तातिलेशो न मे ॥

४. परिविन्रिवाणनैक्कातुमेन्र्—

रक्षाम्येव भवन्तमाश्रितमिति स्वैरं प्रतिश्रुत्य तं
बाणं च त्रिपुरान्तकस्तु समरे सेनासमेतश्शिवः ।
सूनुस्तस्य तथाऽनिलोऽपि च जिताः पक्षेण यस्याप्यमुं
तार्क्ष्यं चाप्यधिरुह्य चक्रधरमेवाहं श्रितो निर्भयः ॥

५. इडरिन्रिये ओरुनाळ्—

दुःखानां शमनाय हन्त ! जगतां पार्थश्च कृष्णाश्रय-
स्सुख्यातस्स च वैदिको निजरथे दिव्यं स्वयं रोपितौ ।
येनासौ परमे च धाम्नि हि विशंस्तस्यात्मजान् वैदिक-
स्यानीयार्पितवान् सदेहमिममाश्रित्यास्मि निर्दुःखभाक् ॥

६. तुयरिल्शुडरोळि—

पूर्णे चोज्ज्वलतेजसि स्वमहिमस्थेम्ना निजे भास्वति
प्रादुर्भूय च मानुषे व्यसनिनि प्रत्यक्ष एव प्रभुः ।
निर्दोषोऽद्भुतकृत्यकृत्किल महामाहात्म्यतोऽभूच्च तं
कृष्णं मायिनमाश्रितोऽस्मि सततं ! स्याद्दुःखगन्धो न मे ॥

७. तुन्बमुमिन्बसुमाकिय—

संसारं सुखदुःखमिश्रमखिलं विश्वं च तन्नारकं
नानादुःखमयं च नाकमपि तं भोग्यं स्वयं व्याप्य यः ।
नित्यानन्तचिदाश्रयो भवति तं नाथं हरिं श्रीधरं
मायामोहमयं विलासरसिकं प्राप्तस्य दुःखं न मे ॥

८. अल्लिलिन्बमलविरन्दु—

निर्दुःखं सुसुखं सदाऽपि परितस्सौन्दर्यतेजोमयं
भोगानन्दमयं श्रिया कमलया नाथं हरिं निस्समम् ।
दिव्यज्ञाननिधिं समस्तजगतां स्रष्टारमेवाच्युतं
कृष्णं मायिनमाश्रितः पदयुगे निर्दुःखगन्धोऽस्म्यहम् ॥

९. तुक्कमिल्लानच्चुडरोलिमूर्ति—

दुःखस्पर्शविहीनमुज्ज्वलमतिं तेजोनिधिं भूषितं
देवं मे तुलसीस्रजाऽप्यभिमतस्वेच्छात्तमायातनुम् ।
नानाचेष्टितमाश्रितं च सकलैर्ब्रह्मादिरुद्रादिभि-
स्स्वांशैर्विश्वभुजं श्रितोऽस्मि! न हि मे शक्त्यादिहानिः कचित् ॥

१०. तळर्विन्रियेयेत्रमेङ्गम् परन्द—

सर्वत्रापि च सर्वदाऽपि च विभुं चक्रं परं कारणं
ज्योतिर्ज्ञाननिधिं स्वतीन्द्रियमहातेजोनिधिं स्वामिनम् ।
चन्द्रार्कात्मकपञ्चभूतमयमप्याश्रित्य मायाविनः
कृष्णस्याङ्घ्रियुगं प्रपद्य न हि मे हानिः कचिज्जातुचित् ॥



११. केडिल् विलुप्पुकळू केशवनै—

निर्दोषं शुभसद्गुणामृतनिधिं तं केशवं श्रीहरिं
स्तोतुं प्राह सहस्रमत्र कुरुकाधीशश्शठारिर्मुनिः ।
तत्रेदं दशकं पठन्ति भुवि ये तेषां हरिश्श्रीधर-
स्स्वाराज्यं च निरङ्कुशं वितनुते श्रेयांसि मुक्तिं पराम् ॥

इति श्रीपरमात्मना श्रीमरकल्किसिंहमहाकवीन्द्रेण
विरचितायां सहस्रगाथारत्नावल्यां
॥ तृतीयशतकं सम्पूर्णम् ॥

## अथ चतुर्थशतके

१. प्रथमदशकम् ( ओरुनायकमाय् )

( अत्र शठारिरुपदिशति-ऐहिकैश्वर्यमस्थिरम्, स्वर्गादि भोगोऽप्यस्थिरः, कैवल्यमल्पकलम्, श्रीभगवदनुभव एव निरपायः परमः पुरुषार्थ इति । )

इदं दशकं श्रीयादवाद्रि-श्रीमन्नारायणपुरविषयकमिति श्रीशठारेरनन्तरङ्गरहस्यविद्रामानुजार्यश्श्रीभाष्यकारो निर्णीय तत्सन्निधौ समर्पितवानिति सम्प्रदायतत्त्वम् ।

१. ओरुनायकमाय्—

एकच्छत्राधिपत्यं विदधति किल ये भूतले तेऽपि काले
नीलश्वाक्रुष्टपादा श्च्युतघटशकला भिक्षुका एव हि स्युः ।
अस्मिन् देहेऽपि सर्वैर्जगति सुविदिता एव ! तस्मात्तु यूयं
श्रीमन्नारायणस्य स्मरत पदयुगं नित्यमुज्जीवनाय ॥

२. उय्मिन् तिरैकोणर्न्दु—

उज्जीव्यं हि करार्पणैरिति नृपानाज्ञाप्य राज्ञां वरा
भूम्यामत्र किल त्यजन्ति रमणीस्स्वीयाश्च मुक्ता अहो ।
अन्येषान्तु करेषु हन्त ! विपिनेऽप्यत्यन्ततीव्रातपे
सन्तप्ता इति दीप्रमौळिसहितं श्रीशं भजध्वं क्षणात् ॥

३. अडिशेर्मुडियिनराकि—

राजानो निजपादसक्तनृपमण्डल्यावळीमौळयो
नित्याकर्णितभेरिनादविजयास्स्वीयाङ्गणेषु स्वयम् ।
धूळीभूतकणाणवः किल गतास्तस्माद्भजध्वं क्षणात्
कृष्णस्यैव सुदिव्यगन्धतुलसीशीर्षस्य पादाम्बुजम् ॥

४. निनैप्पान् पुकिल्—

सञ्चिन्त्येत यदि स्वयं च तदिदं राज्ञां गणाः प्रायशो
ऽनन्तास्ते सिकताधिका हि जलधौ नष्टा युगेषु स्वयम् ।
किं तेषां भवनानि नैव सकलान्यत्यन्तनष्टान्यहो ?
दृष्टं सर्वमतो भजेत्पदयुगं मत्तद्विपध्वंसिनः ॥

५. पणिमिन् तिरुवरुळ्—

रम्यत्वान्वितशीतपुष्पशयने सीमन्तिनीभिस्स्वयं
रामाभिस्सह भोगसारमनुभूयैव प्रियाभिर्जनाः ।
ताभिस्स्त्रीभिरपि स्वयं परिभवं नानाविधं प्रापिता-
स्तस्मान्नीलमणिस्वरूपमनघं कृष्णं भजध्वं सदा ॥

६. वाकन्दार्कळ्—

श्रीमन्तो धनिकाश्च बुद्बुदसमा नश्यन्ति नश्यन्त्यहो !
सत्यं ! जन्मत एव नैकविधता ह्यद्यावधि स्यादहो! ।
तेषां सम्पदि नश्वरत्वमत एवास्तीति यूयं स्थिरां
प्राप्तुं सम्पदमप्यगाधजलधौ सुप्तं हरिं प्राप्नुत ॥



७. आमिन् शुवैयवै—

तत्तादृग्विधषड्रसान्वितमहाश्लाघ्यान्नतृप्ता अपि
स्वैरं मुग्धवधूवचश्चतुरतावश्याः पुनर्भुञ्जते ।
याच्ञार्थं कबळं किलैकमपि च प्राप्तुं च तासामपि
द्वारि स्युस्तत एव दिव्यतुलसीशीर्षं महस्संस्तुत ॥

८. कुणङ्गोळ्निरैपुकळमन्नर—

प्रख्याताश्शुभकीर्तयोऽपि च नृपा दानप्रशौण्डास्स्वयं
लोकानामधिपाश्च भोगरसिकास्सत्यं निवृत्ताः पुनः ।
श्रीशस्याश्रयणं विनैव हि ! ततश्श्रीशेषशय्याश्रयं
नाम्ना कीर्तयताच्युतम् ! न हि तदा वस्स्यान्निवृत्तिः पुनः ॥

९. पडिमन्नु पल्कलन्—

क्षेत्रं चाभरणादिकं च सकलं सन्त्यज्य जित्वेन्द्रिया-
ण्यत्यन्तं च विशोष्य कायमनिशं क्षीणाः कृशाङ्गा अपि ।
अन्ये सन्ततभोगसक्तहृदयास्स्वर्गस्थिताश्च च्युता-
स्तस्मात्तौ गरुडध्वजस्य चरणौ प्राप्य स्त नित्याच्युताः ॥

१०. कुरुक मिकवुणर्वत्तोडु—

ज्ञानादेव शुभाद्विचिन्त्य सकलान् सन्त्यज्य भोगानहो !
स्वात्मानन्दमहानुभूतिविभवं प्राप्ताश्च नो भुञ्जते ।
कैङ्कर्यानुभवामृतं भगवतस्तेषामपि ज्ञानिनां
कैवल्यं किल नित्यपाश्चनिरयश्श्रीशं श्रिता मोक्षगाः ॥

११. अऽऽदेयुय्यप्पुकुमारेत्र—

मुक्त्यै सोऽयमुपाय इत्यपि हरेः कृष्णस्य पादद्वये
रम्यश्रीकुरुकापुरीशशठजित्सूर्यर्पिते भक्तितः ।
साहस्रे च मनोरमेऽत्र दशकं कैङ्कर्यरूपे त्विदं
सर्वं ये तु विदन्ति ते भवभयं प्रध्वंस्य चोज्जीविताः ॥

## अथ चतुर्थशतके

### २. द्वितीयदशकम् ( पालनायेलुलकुण्ड )

( अत्र श्रीशठारिर्नायिकावस्थां प्राप्य श्रीभगवतः पूर्वावतारान् द्रष्टुमिच्छया तत्पादतुलसीं कांक्षत इति-नायिकाजननी प्रतिपादयति । )

१. पालनायेलुलकुण्डु—

बालस्य सप्तभुवनान्युपभुज्य तुष्ट्या
पत्रे वटस्य शयितस्य पदाब्जयुग्मे ।
दिव्या ममास्तु तुलसीह सुशीतलेति
क्रन्दत्यहो मम सुताऽद्य सुशीलवल्ली ॥

२. वल्लिशेर्नुण्णिडैयायुच्चियर्—

वल्लीसमास्तनुकटीः परिभुज्य गोपी-
र्यस्साहसादकृत रासविधानलीलाम् ।
दिव्यां च तस्य तु हरेस्तुलसीं पदस्थां
वाञ्छत्यहो ! मम सुता किल पापवल्याः ॥

३. पाविियल्वेदनन्मालै—

छन्दांसि च श्रुतिमयानि च दिव्यमाला
आनीय देवनिवहैर्मुनिभिश्च पूज्यैः ।
आराधितस्य तुलसीं पदपद्मसक्तां
वाञ्छत्यहो ! मम सुता कुसुमस्रगाव्या ॥

४. कोदिलवण् पुकल्कोण्डु—

निर्दोषदिव्यगुणकीर्तनसक्तचित्तान्
विद्वद्वरानपि च मोहयतो मुरारेः ।
पादाब्जदिव्यतुलसीं सततं पठन्ती
सेयं सुता शुभभुजा मम पापवल्याः ॥



५. तोळिशेर्पिन्नै पोरुट्टु—

नीळां मनोरमभुजामुपभोक्तुकाम-
स्ससर्षभानपि च यो जितवांश्च गोपः ।
तस्याङ्घ्रिगा घटभृतस्तुलसी शुभेति
क्रन्दत्यहो ! प्रतिदिनं मम कन्यकैषा ॥

६. मादर्मामण्मडन्दै—

नारीजनोत्तममहापृथिवीं च भोक्तुं
वाराहरूपभृत एव पुरा धरित्रीम् ।
अण्डात्समुद्धृतवतस्तुलसीं पदस्थां
सङ्कीर्त्य मोहितमतिर्हि ममात्मजेयम् ॥

७. मडन्दैयैवण्कमलत्तिरुमादिनै—

पद्माश्रया च तरुणी रमणीमणिश्श्री-
र्यस्यास्ति वक्षसि धृता सुविशालरम्ये ।
तस्यैव दिव्यरचनां तुलसीं पदाब्जे
स्मृत्वाऽवसीदति सुता मम ! दीप्रफाला ! ॥

८. कोम्बुपोल्शीदैपोरुट्टु—

सीताभिरक्षणधिया नगरीं च लङ्कां
दग्ध्वा शराग्निभिरहो ! जगतां प्रशास्तुः ।
देवस्य दिव्यसुरभिं तुलसीं पदाब्जे
वाञ्छत्यसौ मम सुता ! किमिहाद्य कुर्याम् ? ॥

९. नङ्गैमीर्नीरुमोर्पेण्पेत्तुनल्किनीर्—

यूयं च पूर्णहृदयास्तनयां प्रसूय
प्रासाः प्रहर्षमहमद्य सुतां च दीनाम् ।
एनां किमित्यहह ! वच्मि ? तदीयशङ्कं
चक्रं च हन्त ! तुलसीं सततं प्रवक्ति ॥

१०. एन् शेयूकेन् एन्नुडैप्पेदै—

दीना ममाद्य तनुजा किल कोमलेयं !
वश्या न मेऽस्ति ! न हितं शृणुतेऽद्य पूर्णाः ! ।
कृष्णस्य पादतुलसी शुभवक्षसोऽद्य
स्वोच्चस्तनाभरणमेवं हि वाञ्छतीयम् ॥

११. मेलियुम् नोय् तीर्क्कुम्—

विश्लेषदुःखशमनस्य पदाब्जसक्तः
कृष्णस्य चाह कुरुकाधिपतिश्शठारिः ।
साहस्रमुत्तमगुणं ! दशकं तदेत-
द्भक्ताः पठन्ति यदि यान्ति च सूरिगोष्ठीम् ॥

---

## अथ चतुर्थशतके

### ३. तृतीयदशकम् ( कोवैवायाळ् )

( अवताराणां दर्शनेन सुप्रीतश्शठारिरत्र स्वकरणादि सर्वं समर्पणं करोति । )

१. कोवैवायाळ्—

बिम्बोष्ठीमुपलब्धुमेव वृषभध्वंसी च लङ्केशितु-
र्हन्ता त्वं किल मत्तहस्तिदशनध्वंसी हरिश्श्रीधरः ।
नाहं त्वां कुसुमैर्जलैरुपचरन्नाराध्य धन्योऽस्म्यहो !
चित्तं मेऽस्त्यतसीसुमायिततनोस्तेऽथाङ्गरागायितम् ॥



२. पूशुं शान्देन्नेञ्जमे—

ईशस्यापि जगत्त्रयावनकृतश्चाप्येकमूर्तेः प्रभो-
रस्माकं तव दिव्यगन्धमपि मे चित्तं स्रजं वाक्कृतिम् ।
वस्त्रं ते मम सूक्तिमेव किल तां भूषां च दिव्यां तव
श्रीशस्याञ्जलिबन्धमेव मम भो ! जानीहि भोग्यं त्रयम् ॥

३. एकमूर्ति यिरुमूर्ति—

मूर्तिश्चैकविधा द्विधाऽपि किल सा त्रेधाऽप्यनेकात्मिका
भूतानामपि पञ्चकं शशिरवी च त्वं हि सूक्ष्मान्तरः ।
दुग्धाब्धौ शयितश्च शेषशयनो नारायणोऽसि स्वयं
भुक्त्वेदं सकलं च तन्मम मनस्यात्माऽस्मि निर्दुःखभाक् ॥

४. मायत्तलेण्णि वाय्मुलै तन्द—

हत्वा च स्तनदायिनीं किल भवान्मायाविनीं मायया
गोपालोऽपि च वामनोऽपि च भवानासीत्स्वयं माधवः ।
त्वां नाराध्य कृती किलास्मि भगवन्नद्यास्ति धन्या त्वियं
भूषा श्रीमकुटस्य ते मम विभो प्राणात्मिका मालिका ॥

५. कण्णियेनदुयिर्कादल्—

आत्मा मे ननु मालिका मम विभोः कृष्णस्य कालेशितुः
विष्णोश्चक्रभृतोऽस्ति भक्तिरपि मे मौल्यादिभूषामयी ।
सैव स्याद्वसनात्मिका त्रिजगतां शस्यापि कीर्तिश्च सा
श्रीशस्यैव हरेस्समस्तमपि मे भात्येव भोग्यात्मकम् ॥

६. कालशक्करत्तोडु वेण्शङ्गम्—

कालाधीश्वरचक्रशङ्खविलसत्पाणे ! जगद्रक्षक ?
त्वं नारायण एव सर्वजगतां स्रष्टाऽप्यहो रक्षकः ।
इत्येवं बहुधाऽपि घोषणरवैराहूय च त्वामहं
भग्नाशोऽस्मि तथाऽपि ते पदयुगं मन्मूर्ध्नि भूषायते ॥

७. कुरैकलल्कल् नीट्टि—

मातुं भूमितलं समस्तमपि यत्पादाब्जतो वामन!
त्वं जातोऽत्र तवाङ्घ्रिपङ्कजरतास्त्वां मायिनं संश्रिताः ।
नाहं त्वां हरिमर्चयन् कुसुमतो धन्योऽस्मि पाद्यादिभिः
दिव्यं तेऽस्ति तथापि चात्मनि हि मे वेदान्तगूढं वपुः ॥

८. एन्नदाविमेलैयाय्—

प्रीत्या चात्मनि मे त्वमुज्ज्वलतनुर्ज्ञानात्मकस्सर्वतो
लोकान् सप्त च सम्प्रविश्य सकलं भूत्वा स्वयं भ्राजसे ।
आत्मा मे तव वश्य एव च तवाप्यात्मा वशो मे हरे
दृष्ट्वा चाखिलमित्थमित्यपि च तद्वक्तुं न शक्यं हि मे ॥

९. उरैक्कवल्लेनल्लेन्—

वक्तुं नैव हि शक्तिरस्ति मम ते कीर्त्यब्धिपारं कदा
यामि श्रीधर भक्तिवश्यहृदयो मुग्धोऽस्मि तेजोनिधे ।
सर्वस्मात्पर दिव्यलक्षणगुण श्रीसूरिसंस्तव्य भो
देव श्रीपुरुषोत्तमाद्य करवै स्तोत्रं तवाज्ञोऽप्यहम् ॥

१०. यानुमेत्ति येवुलकुमुत्तुमेत्ति—

स्तोतुं चेत्प्रवणोऽस्म्यहं च सकला लोकास्स्वयं श्रीधर-
स्साक्षादच्युत एव च स्तुतिरियं किं वाऽस्ति शक्या क्वचित् ।
दिव्यं तन्मधु दुग्धमेव मधुरं किं शर्कराखण्ड ए-
वाहोस्वित्त्वमृतं किमित्यहमपि स्तौम्येनमुज्जीवितुम् ॥

११. उय्वुपायमत्तिन्मै तेरि—

नान्यत्साधनमस्ति सर्वजगतामुज्जीवनायेत्यसौ
श्रीकृष्णस्य पदाब्जयुग्मनुतये गाथासहस्रंमुनिः ।
दिव्यश्रीकुरुकेश्वरश्शठरिपुः प्राह स्वयं ये पुन-
स्तत्रेदं दशकं पठन्ति भुवि ते भूमेर्दिवश्चेश्वराः ॥

———०———



## अथ चतुर्थशतके

### ४. चतुर्थदशकम् ( मण्णैयिरुन्दु )

( अत्र नायिकावस्थां प्राप्तश्शठारिर्मोहात्सदृशवस्तूनि दृष्ट्वा क्रन्दतीति जननी वदति । )

१. मण्णैयिरुन्दु—

भूमिं स्पृष्ट्वा किलेयं वदति मम सुता वामनेनैव पूर्वम्
पादाक्रान्ता धरेयं त्विति गगनतलं वीक्ष्य तद्वासदेशम् ।
श्रीवैकुण्ठं हि वक्ति स्वकरयुगमुखाद्दर्शयन्ती च साश्रुः
प्राहैनं वार्धिवर्णं किमहह करवै मत्सुतोन्मादकर्तुः ? ॥

२. पेय्वल्क्कैकलैक्कूप्पि—

कृत्वा चाञ्जलिबन्धमेव शिथिलीभूतस्वभूषात्कर-
द्वन्द्वाद्वारिनिधिं प्रदर्श्य च रविं श्रीशस्य वासस्थलम् ।
तेजोराशिनिधिं प्रदर्श्य च रविं श्रीशस्य बिम्बोऽयमि-
त्येवं मे तनुजाऽश्रुपूर्णनयना नारायणेत्याः कथम् ॥

३. अरियुम् शेन्दीयैत्तळुवि—

आलिङ्ग्याग्निमयं ममाच्युत इति प्रेम्णोज्ज्वलं मे सुता
चित्रं नैव हि दह्यते च पवनं स्पृष्ट्वाऽपि चाश्लिष्य च ।
गोविन्दो मम सोऽयमित्यपि वदेद्गन्धस्तुलस्या भवेत्
पापिन्याऽद्य न वेद्यते किल मया किं किं करोति भ्रमात् ॥

४. ओनियतिङ्गळैक्काट्टि—

चन्द्रं पूर्णकलं प्रदर्श्य मणिवर्णं श्रीहरिं तं वदे-
दद्रिं वीक्ष्य किल स्थिरं प्रणयिनं तं नायकं चाह्वयेत् ।
वर्षन्तं च विलोक्य वारिदमियं नारायणं त्वागतं
मत्वा नृत्यति कोमला मम सुता भ्रान्ता कृता साम्प्रतम् ॥

५. कोमळवान् कनैप्पुल्किं—

वत्सानाश्लिष्य सेयं सुतरुणवयसस्ते च गोविन्दपाल्या
इत्येवाह स्वयं चाप्यनुसरति हठात्सर्पमेव प्रयान्तम् ।
तस्येयं भाति शय्येत्यहह मम सुतामीदृशीं भ्रान्तचित्तां
मायावी कोमलां किं बत बत कुरुते हन्त वल्लीं न जाने ॥

६. कूत्तर्कुंडमेड्डुत्ताडिल्—

लीलासक्ता घटैश्चेन्मम किल तनया चानुयात्येव कृष्णो
गोविन्दोऽयं ममेति भ्रमवशहृदया वेणुनादे च मुग्धा ।
सोऽयं मायीति दृष्ट्वा सपदि च नवनीतं तु तद्भुक्तमाह
श्रीशः किं पूतनाया असुहरणपटुः कोमलां मेऽद्य कुर्यात् ॥

७. एरिय पित्तिनोडु—

विश्वं कृष्णेन सृष्टं वदति किल महामोहवश्या यदि स्या-
दूर्ध्वां रेखां विलोक्य भ्रमत इह तदीयत्वबुद्ध्याऽनुधावेत् ।
दृष्ट्वा सेयं तुलस्या दळमपि वदति स्रक् च नारायणस्ये-
त्येवं मुग्धाऽप्यमुग्धाऽपि च किल कमला मायिनस्तस्य वश्या॥

८. तिरुवुडैमन्नरैक्काणिल्—

भूपालान् वीक्ष्य पूर्णान् हरिरयमनघश्श्रीधरश्चेति वक्ति
भ्रान्ता नानापदार्थानपि वदति हरिं लोकमातारमेव ।
देवागाराणि वक्ति स्वयमपि सहितान् विग्रहैरालयादीन्
भीता वा हन्त मुग्धा सततमपि भवेत् कृष्णपादाब्जसक्ता ॥

९. विरुम्बिप्पकवरैक्काणिल्—

दृष्ट्वा सन्न्यासिवर्गान् विपुलतमजगद्रक्षकं वेत्ति विष्णुं
नीलान्मेघान्विलोक्य स्वयमपि च हरिः कृष्ण इत्युत्सरन्ती ।
सेयं दृष्ट्वा पशूनां निवहमपि स आगच्छतीत्येव गच्छे-
देवं बाला ममेयं सपदि बहुतमां मायिना मोहिताऽस्ति ॥



१०. अयर्क्कुम् शुत्तुम् पत्तिनोक्कुम्—

मुग्धा सादृश्यदृष्टौ ! परित इह तमेवानुचिन्त्यापि पश्येत्
दूरादागच्छतीत्यप्यहह ! ननु भवेत्स्वेदतश्च द्रुताङ्गी ।
उच्छ्वासैस्साश्रुनेत्रा भवति च नितरां सीदतीवाद्ययेत्तं
हे ! कृष्णेति ब्रुवन्ती मदवशहृदया मत्सुता किन्नु कुर्याम् ॥

११. वल्विनै तीर्क्कुम् कण्णनै—

पापध्वंसं शठारिर्मुनिरयमनघस्स्तोतुमेवात्र कृष्णं
सूक्तीस्साहस्रसङ्ख्या अवददिह शुभं ये पठन्त्येव तत्र ।
दिव्यानीमानि पद्यान्यपि दश किल ते दिव्यवैकुण्ठमेत्य
प्रध्वस्ताशेषपापा गुरुवरविनुता यान्ति साम्राज्यसिद्धिम् ॥

---

## अथ चतुर्थशतके

### ५. पञ्चमदशकम् ( वीत्तिरुन्देलुलकुम् )

( अत्र मोहशान्तिं प्राप्य श्रीशठारिर्नित्यसूरिसहितस्य सर्वे-श्वरस्य मङ्गळाशासनं करोति । )

१. वीत्तिरुन्देलुलकुम्—

दिव्यास्थानपदास्थितोऽपि भुवनान्येतानि सप्तापि य-
स्स्वामी शास्ति निरङ्कुशश्च सुगुणैश्शान्त्या च दुर्वाजिहा ।
तं स्वस्तीति पुनः पुनश्च करतो बद्ध्वाञ्जलिं स्तोत्रत-
श्चानन्धास्मि कृती ! न सप्तजनिषु काप्यस्ति हानिस्तु मे ॥

२. मैयकण्णाळ्—

धत्ते यस्त्वसितेक्षणामुरसि तां पद्मालयां श्रीधरं
तं रक्ताम्बुजलोचनं मम कवेः पद्यैस्तु हृद्यैरहम् ।
सूरीणामधिदेवमच्युतमहो ! स्तुत्वा कृती भूतले
सर्वक्लेशविनाशकोऽस्मि च हरेर्विष्णोर्मुखोल्लासतः ॥

३. वीविलिन्बमिकवेल्लैनिकळन्द—

नित्यानन्दसमृद्धमच्युतमहो ! माहात्म्यसीमातिगं
पद्माक्षं सुरबृन्दसेव्यमनिशं स्तोतुं च गीतैर्मम ।
मालारूपधरैस्तु पद्यनिचयैर्हृद्यैरहं भाग्यवान् !
प्राप्यैनं परमां समृद्धिमभजं ह्यानन्दसिन्धोरहम् ॥

४. मैविनिन्नतोळुवार—

नित्यं ये दृढभक्तियुक्तहृदयास्तेषां समस्ताघहं
संश्लेषेण च तार्क्ष्यवाहनममुं श्रीचक्रपाणिं हरिम् ।
वाचा गातुमहं कृती विरचयन् मे पद्यमालामिमां !
किं किं वाऽद्यकरोति मां मम विभुश्श्रीशोऽन्तरात्मा स्वयम् ॥

५. आत्तनल्लवकैकाट्टुमम्मानै—

सन्मार्गान्मम दर्शयन्तमनघं देवाधिदेवं प्रभुं
दिव्यार्थान्मम बोधयन्तमपि तं गीतागुरुं श्रीधरम् ।
पापव्याधिततिप्रशान्तिविधये मे पद्यमालामिमां
कृत्वा स्तौमि हि सन्ततं च ! परमानन्दं भजेऽहं ततः ॥

६. करियमेनिमिशै—

मेघश्यामलमूर्तिमञ्जनविधौ चूर्णांशरम्याम्बकं
सूरीणामधिदेवमच्युतमहं स्तुत्वाऽद्य पद्यैर्मम ।
गीतैर्भोक्तुमयं कृती किल महान् धन्योऽस्मि ! किं वाऽधुना
हन्त ! प्राप्यमितः परं च मम यत्पूर्णोऽस्मि भाग्यैरहम् ॥

७. एन्नमोनाकि—

एकोऽसौ सततं समाधिकतरैर्हीनो हरिश्श्रीधरो
लोकानां प्रभुरच्युतो गिरिधरो वर्षात्स्वयं रक्षकः ।
नाथं तं मम हृद्यपद्यकुसुमस्रग्भिर्हरिं भूषितं
कर्तुं भाग्यमिदं च तस्य कृपया लब्धं ! न मेऽन्यस्पृहा ॥



८. नमक्कुम् पूविन्मिशैनङ्कैक्कुम्—

अस्माकं परमः प्रियश्च सततं लक्ष्म्याश्च योऽसौ पति-
र्भौमानां दिवि वासिनामपि हरिर्नाथश्च पद्मोद्भवात् ।
तं स्तोतुं मम सूक्तिहारततिभिर्भाग्यं हि मे वर्तते !
न स्यान्मे परमे पदेऽपि च समःकश्चित् स्वयं भाग्यवान् ॥

९. वानत्तुम् वानत्तुळ्ळुम्बरुम्—

स्वर्लोके परमे पदेऽपि च भुवि स्थानेषु भूमेरधो-
देशेष्वष्टदिशासु चाच्युतममुं सर्वेश्वरं रक्षकम् ।
अन्तर्गर्भविशालशङ्खविलसद्बाहुं स्तुवन्माधवं
कुम्भोल्लासि परात्परं कवयिता सोऽहं कविर्निस्समः ॥

१०. उण्डुमुमिळ्न्दुम् कडन्दुमिडन्दुम्—

भुक्त्वा चापि समुद्गिरन्तमपि तं चाक्रम्य पादेन च
प्रोद्धृत्यापि शयानमेवमभिषिक्तालङ्कृतस्वासनम् ।
राज्ये चोत्सवसम्भ्रमान्वितममुं प्रत्यक्षचेष्टाकुलं
स्तौम्येवं जगदीश्वरं द्रविडसद्ग्रन्थैर्बुधानां प्रियैः ॥

११. मारिमाराद्तण्णम्मलै—

वर्षैस्सन्ततशीतले सुरुचिरे श्रीवेङ्कटाद्रौ प्रभुं
सस्याढ्यैस्सुसमृद्धदिव्यकुरुकापुर्याश्शठारिः प्रभुः ।
स्तोतुं चाह सहस्रपद्यसरणिं रम्यां महात्मा मुनि-
स्तत्रेदं दशकं भुवीह पठतां पद्मालयाऽघं हरेत् ॥

———०———

## अथ चतुर्थशतके

### ६. षष्ठदशकम् ( तीर्प्पारैयामिनि )

( अत्र पुनश्च मोहाविष्टश्शठारिर्नायिकावस्थां प्राप्त इति क्षुद्रदेवताराधनपरान् मातृजनान् प्रति सखी वदति श्रीभगवन्नामसङ्कीर्तनं, श्रीवैष्णव श्रीपादधूळिश्चास्य रोगस्य परिहाराय भवतीति । ).

१. तीर्प्पारैयामिनि—

मातः पश्य निदानमेव हि रुजोप्यस्या न विद्मो वयं
किं पश्याम चिकित्सकान् ? कथमिदं चेत्येव चिन्त्येत चेत् ।
अस्या रोगनिदानमद्य हि वयं निर्णीय विद्मस्त्वियं
युद्धे पञ्चजयावहस्य रमणी श्रीपार्थसूतस्य हि ॥

२. तिरैक्किन्रदेयिवळ्नोय्—

मोहोऽयं हि रुजैव सम्भवति ! यद्दैवं महच्चाद्भुतं
तत् ! क्षुद्रा न हि देवतास्तु भवतामस्या रुजः कारणम् ।
भ्रान्तिर्मास्तु यथा शृणोति च तथा तच्छङ्खचक्रे स्वयं
यूयं कीर्तयताद्य तत्क्षणमियं मोहं त्यजेत् पश्यत ॥

३. इदुकाण्मिनन्नैमीर्—

यूयं पश्यत मद्वचोऽद्य शृणुत क्षुद्रात्वियं शाकुनी
मूढाऽस्या वचनानुगा बत सुरामांसादिदुष्टार्पणम् ।
यूयं मा कुरुताद्य मायिन इदं स्तोत्रं पदाब्जं हरे-
र्दिव्यं गायत दीप्रमौळिभृत एवास्याः परं चौषधम् ॥



४. मरुन्दाकुमेन्रङ्गोर मायवलवै—

दिव्यं भेषजमेतदित्यपि वृथा क्षुद्रान्तु यां काञ्चिद-
प्येनां माऽनुगतास्स्त हेयचरिते क्षुद्रालये चार्पणात् ।
अन्नं नीलतमं च रक्तमपि तत्रानीय किं स्यात्फलं
सेयं जीवति सप्तलोकसवितुर्विष्णोस्तु सङ्कीर्तनात् ॥

५. इवळैप्पेरुम् परिशु—

क्षुद्रोऽयं तु न हि क्रमो बत बत प्राप्तुं च बिम्बाधरा-
मेनामुत्पललोचनामहह हा ! भीता त्वियं सीदति ।
देवं मत्तगजप्रणाशकममुं सङ्कीर्त्य नाम्ना हरिं
तत्पादाम्बुजरेणुभिश्च कुरुताचैनान्तु सञ्जीविताम् ॥

६. तणियुम् पोळुदिन्नीर्—

यूयं हन्त ! वृथैव सन्ततमपि भ्रान्ताः किलास्या रुजं
संवर्ध्य श्रमवत्य एव न हि सन्तापोऽस्ति शान्तोऽधुना ।
दिव्यं तन्मणिवर्णमायिभगवत्पादाब्जभाजां सतां
पादाम्भोजरजः प्रयोजयत भो ! नान्यद्भवेदौषधम् ॥

७. अणङ्गुक्करुमरुन्देन्रु—

अस्या औषधमेतदित्यपि वृथा यूयं सुरां चाजम-
प्युद्दिश्यापि भुजादिचालनवशादावेशवश्या इव ।
नृत्यन्तः किमहो ? किमस्ति तु फलं दृष्ट्वाऽधरस्पन्दनं
व्रीडन्ते बत रासभस्य? भजत श्रीशं श्रितान् श्रोत्रियान् ॥

८. वेदम् वल्लार्कळैक्कोण्डु—

वेदार्थज्ञमुखात्प्रपद्य चरणाम्भोजद्वयं श्रीपते-
स्सूरीणामपि नायकस्य तु हरेर्द्रोगं किलास्याः क्षणात् ।
एवं हन्त ! न कुर्वते किल जना युष्मादृशा देवता
वाद्यैर्मद्ययुतार्पणैरुपचरन्त्येवेत्यवज्ञा हि वः ॥

९. कीलमैयिनालङ्गोर्—

क्षुद्रैः कल्पितमेव वाद्यनिचयं संशब्द्य च स्तोत्रतः
क्षुद्रावेशयुतास्तु यूयमिति यद्द्रष्टुं न शक्यं मया ।
क्षेमं सप्तकुलान्वयादपि परं दिव्यौषधं प्राक्तनं
तच्चेदं कुरुताङ्घ्रिपङ्कजयुगं कृष्णस्य नत्वा सदा ॥

१०. उन्नित्तु मत्तोरुदेय्वम् तोळाळ्—

नान्यद्दैवमियं स्मरेदुपचरेत्कृष्णात्परं श्रीपते-
र्यूयं स्वामिमतं प्रजल्प्य च भुजान् स्वैरं प्रचाल्यापि वः ।
यत्नानेव वृथाश्रिताः किल परित्यज्येदमद्यागमै-
र्वेद्यं द्वारवतीपतिं स्तुत नुतेस्सेयं परं नृत्यति ॥

११. तोळुदाळ्त्तिमणिवण्णनुक्कु—

नत्वा श्रीमणिवर्णमेव सततं नृत्तेषु सक्तो हरिं
प्राप्य ध्वस्तसमस्तरोगसरणिः ख्यातश्शठारिर्मुनिः ।
दिव्यां चाह सहस्रपद्यसरणिं दुर्दैवतावेशनुत्
तत्रेदं दशकं पठन्ति यदि ते निर्दुःखगन्धास्स्वयम् ॥

---

## अथ चतुर्थशतके

### ७. सप्तमदशकम् ( शीलमिल्लाच्चिरियनेलुम् )

( अत्र शठारिर्मोहशान्तिं प्राप्य दिव्यमङ्गळविग्रहदर्शनार्थं महोरात्रं क्रन्दति । )

१. शीलमिल्लाच्चिरियनेलुम्—

लोकानामसि रक्षकस्त्वमनिशं ज्ञानस्वरूपो हरि-
र्हे ! नारायण माधवेति सततं त्वामेव सङ्कीर्तयन् ।
द्रष्टुं सुन्दरमूर्तिमेव हि तव श्रीनाथ काङ्क्षे सदा
नायासि त्वमहो न मां नयसि चेत् क्षुद्रस्य मेऽघं महत् ॥



२. कोळ्ळमाळाविन्बवेळ्ळम्—

मातुं भूमितलं हि वामनवपुस्त्वं मामुदाराशय-
स्त्वानन्दामृतवारिधौ च कुरुषे मग्नं महानित्यहम् ।
एवं हन्त दिवानिशं च सततं त्वामेव सङ्कीर्तये
मायामूर्तिरहो न मे नयनयोर्द्रष्टुं हि पात्रं भवान् ॥

३. ईविलादतीविनैकळ्—

पादाभ्यां जगदाक्रमं रचयिता स्वामी च दामोदरो
विख्यातोऽस्ति भवानिति स्वयमहं तूद्घुष्य चार्द्राशयः ।
पूर्णाश्रुर्यदि चास्मि मां न हि भवान् पापी किलासीत्यहो
वाचं वक्ति ममास्ति पापसरणिर्नित्याविनाश्या ततः ॥

४. काणवन्देन् कण्गुकप्पे—

ब्रह्मेन्द्रादिसुरव्रजैरपि भवान् भक्तैर्न दृश्योऽस्त्यहो
माहात्म्यं तव तादृशं हि परमं स्वामिन् सुवर्णाकृते ।
पद्माक्ष त्वमिहैव मे नयनयोर्दृश्यो भवेत्यप्यहं
निर्लज्जो ननु वच्मि नीचहृदयः किं स्यात्फलं मेऽत्र वा ॥

५. अप्पने अडलाळियाने—

स्वामिन्नाश्रितवत्सलोऽसि हि हरे श्रीचक्रपाणे भवान्
वीरो वारिधिमन्थनो ननु भुजैर्दिव्यैश्चतुर्भिस्तव ।
इत्येवं सततं सबाष्पनयनः प्राणैश्च शुष्कायितै-
राक्रन्दाम्यधुनैव सत्वरमहं द्रष्टुं हि मे चापलात् ॥

६. नोक्कि नोक्कि युन्नैक्काण्बान्—

अन्तर्मे हृदयेऽपि चात्मनि बहिश्चापि स्वयं सन्ततं
भास्वानेव भवानिति स्वयमहं ज्ञात्वाऽपि चान्तर्हृदि ।
द्रष्टुं त्वां बहुधाऽस्मि चापलवशो नेत्रद्वयेनेत्यहो
मौर्ख्यं मे महदस्ति दुस्सहमिदं किं दुर्निवारं भवेत् ॥

७. अरिन्दरिन्दुतेरित्तिरि—

स्वामिन् दिव्यसुगन्धरम्यतुलसीमालाढ्य सर्वेश्वर
त्वां दृष्ट्वाऽपि च चक्षुषा हृदि सदा निध्याय शान्तोऽन्तरा ।
एषोऽहं मम चान्तरात्मनि हरिं ज्ञानैकमूर्तिं परं
कृत्वा त्वां जनिमृत्युपाशसरणेर्मोहाच्च दूरीकृतः ॥

८. कण्डुकोण्डेन् कैकळार—

दृष्ट्वा त्वां तव पादपद्मयुगळे हस्तै स्समर्प्याप्यमी
भक्त्या सर्वदिशोपलभ्यकुसुमान्याराध्य च स्तोत्रतः ।
हृष्टास्सम्प्रति गीतनृत्यसहिता भक्ता वयं स्याम चे-
त्येवं त्वं तुलसीस्रजाऽञ्चित विभो लोकेऽत्र नागच्छसि ॥

९. इडकिलेनोन्नट्टकिल्लेन्—

अन्नं नैव ददामि जातु चिदहं पानीयमप्यर्थिने
ज्ञातुं नैव जयामि पञ्चकरणग्रामं न भक्त्या सदा ।
पुष्पैरर्चयितुं यते स्तुतिपरः पापी किलाज्ञोऽस्म्यहं
द्रष्टुं चक्रधरं तथापि कुतुकी पश्याम्यहं काच्युतम् ॥

१०. शक्करत्तण्णलेयेत्रु—

स्वामिन् चक्रधरेति चार्तहृदयो नम्रश्च साश्रुस्सदा
त्वामन्विष्य विषादवानहमहो पापी न पश्यामि हि ।
दिव्यज्ञाननिधिं हरिं मुररिपुं वेदैकवेद्यं किल
त्वामालिङ्ग्य कृती भवामि मनसा मज्ज्ञानदृष्ट्या भजन् ॥

११. तळुविनिन्नकादल्तन्नाल्—

भक्त्याऽसौ दृढभावबन्धभरितस्स्तोतुं सरोजाम्बकं
रम्यश्रीकुरुकेश्वरश्शठरिपुः पद्यावळीं द्राविडीम् ।
दिव्यां हि व्यतनोत्सहस्रगणितां तत्रापि ये नर्तनै-
स्तच्चेदं दशकं पठन्ति भुवि ते वैकुण्ठमेवाप्नुयुः ॥





## अथ चतुर्थशतके

### ८. अष्टमदशकम् ( एराळुमिरैयोनुम् )

( अत्रापि नायिकावस्थया सर्वेश्वरस्यानादरणीयं सर्वमप्या-
त्मात्मीयं त्याज्यमिति प्रतिपाद्यते । )



१. एराळुमिरैयोनुम्—

ईशानो वृषभध्वजोऽपि चतुरास्योऽपि स्वयं श्रीरपि
स्वस्वस्थानमिति प्रियं वपुरहो ! यस्याश्रितास्तस्य तु ।
रक्षोबृन्दविनाशकस्य च हरेर्नेच्छेत्प्रियं किं फलं
सौन्दर्येण महोज्ज्वलेन मणिवच्चास्माकमङ्गेषु वा ? ॥

२. मणिमामै कुरैविल्ला—

यस्योरस्यनिशं वसत्यहह ! सा नित्योज्ज्वलश्रीरपि
श्रीदेवी कमला तु यस्य च भुजौ वृत्तौ शुभौ पीवरौ ।
यश्चक्रं करतो बिभर्त्यरिहरं तेनास्मि सेवाविधौ
नित्यं चापि नियोजिता ! मम मनस्तस्याप्रियं निष्फलम् ॥

३. मडनेञ्जाल् कुरैविल्ला—

वत्सप्रीतियुतान्तु मातरमभूद्दुष्टाऽनुकृत्य स्वयं
मायापूतनिरूपिणी विषमयस्तन्या पुरा या तु ताम् ।
हन्तुर्ज्ञाननिधेश्शिशोर्दृढभुजस्यानन्तशय्याभृतः
कृष्णस्याप्रियमेव यत्किल ततः स्त्रीत्वात्फलं किं मम ॥

४. निरै विनाल् कुरैविल्ला—

स्त्रीसाद्गुण्ययुतां सुबाहुयुगळां नीळां शुभां सुस्तनीं
भोक्तुं यो वृषसप्तकं प्रमथयन् हृष्टो विवर्णाम्बरः ।
बिभ्राणोऽपि च दुग्धपात्रमपि यो दण्डं च घण्टामणिं
तस्येदं यदि न प्रियं मम तनोर्वर्णाच्छुभात्किं फलम् ॥

५. तलिर्निरत्ताल् कुरैविल्ला—

पूर्णौ पल्लवशोभयाऽपि च पृथक्कारागृहस्थां च तां
विख्यातां शुकभाषितां पुनरपि प्राप्तुं च रक्षोऽधिपम् ।
हत्वा तन्नगरे प्रदह्य तुलसीसौगन्ध्यमौलेर्हरे-
र्भूसाम्राज्यभृतः प्रियं न यदि तज्ज्ञानं च मे निष्फलम् ॥

६. अरिविनाल् कुरैविल्ला—

ज्ञानापेक्षितहीनमूतलभुवां सर्वानुपायान् हरि-
र्दिव्यज्ञाननिधिश्शुभानुपदिशन् यो दिव्यमूर्तिः पुरा ।
आसीद्वामनरूपधृच्च धरणीं यो वञ्चनादग्रहीत्
तन्त्रज्ञस्य न तस्य चेत् प्रियमहो लावण्यतः किं फलम् ॥

७. किळरोळियाल् कुरैविल्ला—

स्वाभाव्यान्मणिनीलवर्णसुतनुर्दीप्रोज्ज्वलश्रीधर-
स्सिंहोऽभूच्च हिरण्यकासुरमहावक्षो विदीर्य प्रियः ।
भक्तानामपि शङ्खचक्रभृदसौ रक्षार्थमेवाच्युत-
स्तस्येदं यदि न प्रियं वलयतः किं स्यात्फलं मे करे ॥

८. वरिवळैयाल् कुरैविल्ला—

दिव्यध्वानसुपाञ्चजन्यमुखतश्चासीद्रिपूणां हृदि
प्रज्वालोऽस्य भयानलः किल पुरा भूम्यास्तु भारापहम् ।
ब्रह्मेन्द्रादिशिवादयोऽपि तमिमं नत्वा स्वयं तुष्टुवु-
र्यद्यस्यास्ति न तु प्रिया सुरुचिरा काञ्ची च मे स्याद्वृथा ॥

९. मेकलैयाल् कुरैविल्ला—

काञ्चीदामलसत्तनुश्च तनुजा साऽभूदुषा च स्नुषा
कृष्णस्येति सुकीर्तिशौर्यशरधिर्बाणासुरो वीर्यवान् ।
छित्वा बाहुपरम्परामपि हरिस्तस्यास्त्यसौ योगभाङ्-
निद्रावानिव शेषतल्प इह मे कायो वृथाऽस्याप्रियः ॥



१०. उडम्बिनाल् कुरैविल्ला—

नित्यं ये तु शरीरपोषणपरास्तांश्चासुरान् खण्डयन्
भित्वा पर्वतसन्निभानपि हरिर्हृष्टोऽभवन्माधवः ।
तं पार्श्वे श्रितवान् हरश्च जटया गङ्गाधरो भैक्षित-
स्तस्यायं यदि न प्रियोऽस्ति तु हरेरात्माऽपि मे स्याद्वृथा ॥

११. उयिरिनाल् कुरैविल्ला—

आत्मानस्सकलाश्च यस्य वपुषि श्रीशस्य सन्धारिता-
स्तं कृष्णं नवनीतदुग्धदधिभुक्त्यासक्तचित्तं हरिम् ।
स्तोतुं श्रीकुरुकेश्वरश्शठरिपुर्दिव्यं सहस्रं जगौ ।
तत्रेदं दशकं पठन्ति यदि ते धाम प्रयान्त्यव्ययम् ॥

---

## अथ चतुर्थशतके

### ९. नवमदशकम् ( नण्णादार्मुरुवलिप्प )

( श्रीभगवद्विमुखानां दर्शनं दुस्सहमितिमत्वा शठारिस्स्व-
देहत्यागं कर्तुमिच्छन् भगवन्तं प्रार्थयते
तदीयस्वीकाराय ।)

१. नण्णादार्मुरुवलिप्प—

प्रत्यर्थिस्मितपूर्वकाश्च विविधाः क्लेशा अमी भूतले
स्निग्धानां बहुदुःखहेतव इति ज्ञात्वा वयं त्वां श्रिताः ।
कारुण्याम्बुनिधे ! समुद्रमथन ! त्वत्पादपद्मद्वये
मामद्यैव नियोज्य मे कुरु तनोर्विश्लेषमात्यन्तिकम् ॥

२. शामारुम् केडुमारुम्—

मृत्युश्चापि हठाद्भवेदिह धनध्वंसोऽपि च ज्ञातयो
बन्धूनां निवहास्तलातलि पतन्त्येव प्रलापाकुलाः ।
हा ! हा ! हन्त ! जगत्किलेदृशमहो किं स्यान्न वेद्मि स्वयं
मां शेषं तव शेषनाथ कथमप्याहूय धन्यं कुरु ॥

३. कोण्डाट्टुम् कुलम् पुनैवुम्—

प्राशस्त्यं च कुलीनतामपि भुवि ज्ञात्यादिबन्धूनपि
श्रीसौभाग्यमपि स्त्रियं च तरुणीं प्रासादमप्युन्नतम् ।
त्यक्तुं ये विलपन्ति मृत्युसमये दृष्ट्वा न चैतान् सहे !
(त्यक्त्वा ये भुवि यान्ति मृत्युसमये दृष्ट्वा न चैतान् सहे !)
सौन्दर्याम्बुनिधे न मां त्यज पुरेवाहूय दास्ये कुरु ॥

४. कोळ्ळेन्रु किळरन्देळुन्द—

नित्यारूढसमृद्धिसम्पदमपि स्वस्याभिकल्पां स्वयं
दृष्ट्वाऽप्यस्ति धनातुरोऽत्र तमसा किं लोकयात्रात्वियम् ।
औदार्याम्बुनिधे हरे मणिनिभस्वाङ्ग स्वपादद्वये
नित्यं योजयितुं च मान्तु कृपया दासं जनं स्वीकुरु ॥

५. वाङ्गु नीर्मलरुलकिल्—

पृथ्वीं वारिधिसंवृतां हि मनुजा आश्रित्य तिष्ठन्त्वमी
सर्वेचात्र हि सञ्चरन्ति जननव्याध्याधिमृत्यार्तिभिः ।
क्रूरास्सन्ति च रौरवादिनरका एवं हि यात्रा नृणां
दास्ये मां मणिवर्ण! ते कुरु सदा मा मोहय श्रीधर ॥



६. मरुक्किवल् वलैप्पडुत्ति—

क्षुद्राः क्षोभमपीह बन्धनमपि भ्रष्टा नृणां पीडनं
हा हा हन्त वधं च कुर्वत इमे स्वस्वोदरार्थं खलाः ।
धर्मं नैव विदुर्जगत्यहह किं यात्रेदृशी? तेऽस्म्यहं
दासोऽघी तुलसीस्रगञ्चित! सुधासिन्धो! वृणुष्वाद्य माम् ॥

७. आयेयिव्वुलकत्तु—

लोकेऽस्मिन्नखिलात्मकोऽस्ति हि भवानेव स्वयं सञ्चरन्
स्थित्वा चास्ति न किञ्चिदन्यदहह त्वत्संश्रितं मां कुरु ।
आहूय स्वयमेव मां जनिजराव्याध्याधिहीनं कुरु
श्रीमन् ! क्लेशभरार्दितेऽत्र जगति त्वं मां न तु स्थापयेः ॥

८. काट्टिनीकरन्दुमिळुम्—

विश्वं सर्वमपि प्रकाश्य जठरे धृत्वाऽपि चोद्गीर्य च
प्रोद्भाव्यापि पृथिव्यबग्निपवनाकाशान् बहिस्स्थापयन् ।
देवादीनपि तत्र चाण्डनिलयान् विभ्राजसे त्वं हरे!
प्राप्तुं ते परमं पदं पदयुगे ते मां कदा योजयेः? ॥

९. कूट्टुदिनिन् कुरैकळल्कळ्—

भोग्ये त्वच्चरणारविन्दयुगळे त्वं योजयस्याश्रितान्
प्राज्ञैर्देवगणैरपि स्वयतनैर्गम्यो न हि त्वं हरिः ।
स्वामिन् नागशयाद्य वेद्मि हृदयं तेऽहं च दासो जनो
मां चानन्यपरं विधाय तव पादाब्जे किलायोजय ॥

१०. कण्डु केट्टुत्तुमोन्दु—

दृष्ट्वाकर्ण्य परिस्पृशन्नपि किलाघ्रायापि भुक्त्वेन्द्रियै-
र्नानाभोग्यसुखं त्यजन्नपि च तामात्मानुभूतिं त्यजन् ।
श्रीदेवीं रमणीयभूषणयुतां त्वां चाप्रमेयं हरिं
दृष्ट्वा मे पुरुषार्थमप्रतिभटं प्राप्तोऽस्मि तेऽङ्घ्रिद्वयम् ॥

११. तिरुवडियै नारणनै—

सर्वेषां जगतां शरण्यमपि तं नारायणं केशवं
ज्योतिश्चापि परं स्तुवन्नपि च तत्पादाब्जसक्ताशयः ।
भक्तश्श्रीकुरुकेश्वरश्शठरिपुः प्रोचे सहस्रं शुभं
तत्रेदं दशकं च तत्पदयुगं सम्प्रापयेत् प्राप्नुत ॥

---

## अथ चतुर्थशतके

### १०. दशमदशकम् ( ओनुं तेवुम् )

(देवतान्तरपरान् प्रति कारुण्यात् सर्वेश्वरस्य श्रीमन्नारायणस्य
परत्वं शठारिरत्रोपदिशति । )

१. ओनुं तेवुम्—

देवाश्चापि यदा न सन्ति भुवनान्यात्मान एवं तथा
सर्वं नास्ति तदा चतुर्मुखमुखान् देवांश्च लोकान् सृजन् ।
जीवांश्चाप्ययमादिनाथ इह हि श्रीरत्नसौधावृते
भात्येवं कुरुकापुरे किमितरद्दैवन्तु मृग्यं च वः? ॥

२. नाडिनीर्वणङ्गुम्—

युष्माकं किल दैवतं च सकलं युष्मांश्च पूर्वं सृजन्
नित्यानन्तगुणाम्बुराशिरयमेवास्त्यादिनाथो हरिः ।
अस्येदं किल सन्निधानमखिलैर्लोकैर्भवद्भिस्सदा
स्तोतव्यं कुरुकापुरं मणिमयं गानैश्च नृत्तैश्शुभैः ॥



३. परन्ददेय्वमुम्—

देवानप्यखिलानशेषभुवनं सृष्ट्वा स्वयं भक्षयन्
गुप्त्वा चोद्गिरतीह माति च समुद्धर्ताऽस्ति लोकाः पुनः ।
एवं हन्त विलोक्य वित्थ न हि यद्देवैश्च वन्द्यो हरि-
स्स्वाम्यास्ते कुरुकापुरे किमपरं देवं भवेद्ब्रूत भोः ॥

४. पेशनिन् शिवनुक्कुम्—

ख्यातस्यापि शिवस्य तस्य च विधेरन्यात्मनां चाप्यहो
नाथोऽसौ हि कपालमोक्षचरिते दृश्यं किलैतत्तु वः ।
तेजोधाम्नि च रम्यवप्रकुरुकापुर्यां चकास्तीश्वर-
स्तस्मिन् दोषलवन्नुवामपि फलं किं वाऽस्त्यहो लिङ्गिनाम्? ॥

५. इलिङ्गत्तिट्टपुराणत्तीरुम्—

लैङ्गाश्चापि पुराणवादिन इमे यूयं च ते श्रामणा-
श्शाक्याद्यास्सहसा च वादनिरता या देवतास्ताश्च वः ।
सर्वात्माऽपि स एव विश्वत्रपुषाऽस्त्युद्गीहिकेदारतो
रम्येऽस्मिन् कुरुकापुरे गुणनिधिर्मिथ्या न हि स्तूयताम् ॥

६. पोत्ति मत्तोर्देय्वम्—

स्तुत्वाऽन्यामपि देवतान्तु भजतो युष्मान् बहिष्कृत्य य-
स्त्वेवं तत्र च भक्तियुक्तहृदयान् कुर्यादिदं मायया ।
मुक्तिश्चेत्तु भवादृशां जगदहो शास्त्रातिगं स्यादिति
श्रीब्रह्मजैः कुरुकापुरेऽतिभरिते भात्येष हि त्वर्यताम् ॥

७. ओडियोडिप्पलपिरप्पुम् पिरन्दु—

धावन्तोऽपि च भूय एव बहुधा नाना जनीः प्राप्य चा-
प्याश्रित्येतरदैवतं च विविधैर्गानैश्च नृत्यादिभिः ।
यूयं प्राप्तफलाः किलाद्य सुरबृन्देड्यस्य ताक्ष्येशितु-
श्श्रीविष्णोः कुरुकापुरेऽत्र भजनं स्यादादिमूर्तेर्वरम् ॥

८. पुक्कडिमैयिनाल्—

दास्यात्तं शिवमाश्रितः किलमु निर्यॊऽसौ मृकण्ड्वात्मज-
स्तेनाभूत्परिरक्षितश्च तदिदं नारायणानुग्रहात् ।
फुल्लोत्फुल्लसुगन्धसूनविलसत्सत्केतकीभूषिते
भाति श्रीकुरुकापुरे प्रभुरसावाद्यः किमन्यैस्स्तुतैः ॥

९. विळंबुमारुशमयमुम्—

शब्दाडम्बरषण्मतादिसमयैर्दुष्टैः कुदृष्ट्यादिभि-
श्शक्यो नैव हि मातुमस्ति च हरिर्यस्त्वादिनाथाह्वयः ।
तस्येदं शुभसन्निधानमतुलं शीताम्बुधारावृतं
रम्यं श्रीकुरुकापुरं हृदि सदा ध्येयं हि मोक्षार्थिभिः ॥

१०. उरुवदावदु—

देवास्तेऽप्यखिलास्समस्तभुवनान्यन्यानि चास्य प्रभो-
र्दिव्या मूर्तिरिति प्रसिद्धविभवैर्भाति स्वयं सेव्यताम् ।
सोऽयं श्रीकुरुकापुरे सुरुचिरैर्व्रीहीक्षुकाण्डैरपि
क्षेत्रैरेव लसत्यहो वटुतनुर्यः कुम्भलीलाश्रयः ॥

११. आळ्वेय्दाळिप्पिरानै—

भाति श्रीकुरुकापुरेऽत्र वचसा तं चादिनाथं भजन्
नित्योद्यद्वकुळावळीं हृदि वहन् मारश्शठारिर्मुनिः ।
उत्साहात्किल तत्कृते तु दशकं चैतत्सहस्रे विदु-
र्ये तेषां न पुनर्भवोऽस्ति परमं हस्तेऽस्ति दिव्यं पदम् ॥

इति श्रीपरमात्मना श्रीमत्कल्किसिंहमहाकवीन्द्रेण
विरचितायां सहस्रगाथारत्नावळ्यां
॥ चतुर्थशतकं सम्पूर्णम् ॥





## अथ पञ्चमशतके

### १. प्रथमदशकम् ( कैयार्शक्करत्तु )

( अत्र कृपानिधेर्भगवतोऽनुभवप्रकारः प्रकाशते । )

१. कैयार्शक्करत्तु—

हस्तेनोद्धृतचक्र! नीलमणिवर्णेत्येव मिथ्योक्तिभि-
स्स्तुत्वा त्वामहमस्मि बाह्यविषयेष्वेवात्र सक्तस्सदा ।
एवं कृत्रिमबुद्धिरप्यहह ! सम्प्राप्तोऽस्मि सत्यं फलं
भाग्यं वारयितुं प्रभुः क इह ? किं कृष्णासि गन्तुं प्रभुः ॥

२. पोवाय् मम्मरुदिडुवे—

हे ! युग्मार्जुनमध्यग प्रियमणे मे दिव्यमध्वात्मक
श्रीनाथामृतरूपभागिति बहुप्रेमोक्तिभिस्त्वं स्तुवन् ।
मिथ्याहं नटनैश्च हन्त ! फलभाङ्मय्येव नाथो मम
स्वैरं भाति धराद्युलोकपरमव्योमादिभिश्चाखिलैः ॥

३. उळ्ळनमत्तुळवा—

क्षुद्रेष्वेव किलेतरेषु विषयेष्वासीन्मतिर्मे हरे !
मिथ्याऽहं नटनैरुदार मणिवर्णेत्येव च त्वां स्तुवन् ।
सर्वज्ञस्य च वञ्चकोऽभवमहो तां दुर्दशां सन्त्यजन्
धन्योऽहं तव दर्शनेन हि सुधाम्भोधीन्द्र नान्यद्भजे ॥

४. एन् कोळ्वनुन्नै विट्टु—

किं काङ्क्षेऽद्य विना भवन्तमिति च स्तोत्रं मृषा ते स्वयं
कुर्वन् वञ्चक आसमद्य मनसि स्थैर्येण चाश्रुस्रवैः ।
नात्मानं हि निवारयामि विषयान्मद्दृष्टिमालिन्यहा
त्वं मामाह्वय कृष्ण नान्यशरणोऽस्मीत्येवं सत्यं ब्रुवे ॥

५. कण्णपिरानै—

कृष्णं त्वां प्रभुमच्युतं दिवि महासूरीन्द्रसेव्यं शुभं
माणिक्यं मधुरामृतं च मनसा प्राप्यापि न प्राप्नुयाम् ।
मध्ये मामिह देहबन्धकलितं कृत्वा महापातकैः
पाशैर्मां व्रणपीडितं च परितस्तिष्ठन् बहिर्मां न्यधाः ॥

६. पुरमरक्कट्टिक्कोण्डु—

सर्वत्रापि च मां निबद्ध्य हि बहिर्द्वन्द्वादिभिः पातकै-
स्सन्तप्तं च शरीरसन्ततिरहो हन्त ! व्यधात्तां दशाम् ।
अद्यातीत्य चतुर्भुजं मणिनिभं बिम्बाधरं त्वां हरिं
पद्माक्षं शुभचक्रपाणिमतुलं दृष्ट्वाऽस्मि धन्यः पुमान् ॥

७. अम्मानालिप्पिरानवन्—

चक्री स प्रभुरिन्दिरापतिरहो सूरीन्द्रनाथः क्व वा ?
काहं ? हस्तिमहार्तिनाशनकरेत्येवं किलोद्घोषयन् ।
तद्भक्तिं परमां गतोऽस्मि सुदृढां सत्यां स नाथो मयि
प्रीतश्चास्ति ! विधेरनुग्रहबलात्स्यात्सद्गतिश्चाधिनाम् ॥

८. मेलात्तेवर्कलुम् निलत्तेवरुम्—

दिव्यास्सूरिगणाश्च भक्तनिवहा भूम्यां यमेवाच्युतं
सम्प्राप्ताश्शरणं स भाति हृदये दासस्य मे सुस्थिरः ।
रम्या मे तरुणीगणाश्च सुमहद्भाग्यं सुतास्सद्गुणा
माता चापि पिता स एव च मम श्रीशः किलेतः परम् ॥

९. आवारार्तुणै—

को वा मेऽस्ति सहाय इत्यहमहो संसारपाथोनिधौ
मग्नः पोत इवाम्बुधौ च सुमहाकल्लोलमालाकुले ।
आसं कम्पित एव तत्र च मयि प्रीत्याऽऽविरासीद्धरि-
श्शङ्खं चक्रमुदारदिव्यवपुषा बिभ्रद्दयावारिधिः ॥



१०. आनानालुडैयान्—

मीनात्मा कमठाकृतिश्च नरसिंहात्मा स्वयं वामनो
भूत्वा चापि वने वराहवपुषा (१) भावी च कल्किः पुनः ।
एवं नीलपयोदवर्ण इह मां दास्ये तु धृत्वा हरि-
र्भास्वानित्यपि मद्वचोहृतमनास्सर्वात्मको मेऽभवत् ॥

११. कार्वण्णन् कण्णपिरान्—

कृष्णं नीलपयोदवर्णमपि तं नाथं सरोजाम्बकं
स्तोतुं श्रीकुरुकेश्वरश्शठरिपुस्साहस्रमाहाद्भुतम् ।
दिव्यं द्राविडमुत्तमं च दशकं तत्रेदमत्यादरा-
द्ये भक्त्या तु पठन्ति ते किल हरेः पादाम्बुजं प्राप्नुयुः ॥

---

## अथ पञ्चमशतके

### ※२. द्वितीयदशकम् ( पोलिक पोलिक पोलिक )

( अत्र कलिध्वंसपूर्वकः कृतयुगारम्भः प्रकाश्यते । )

१. पोलिक पोलिक पोलिक—

स्वस्ति स्वस्ति भवत्वनारतमपि स्वस्त्यस्तु नित्यं सतां
विष्णोस्सद्गुणसागरस्य सुगुणान् गायन्ति नृत्यन्ति ते ।
भूम्यामत्र महाशयास्तु परितः पापं प्रणष्टं स्वयं
नैव स्यादिह नारकं न च यमो नश्येत्कलिः पश्यत ॥

---

(१) भावीकल्किरिति सूक्तिरियं पोलिक पोलिकेतिदशकं च श्रीकल्किसिंहावतारमिममेव मामकं सूचयति ।

(२)※ श्रीकल्किसिंहावतारसूचकमिदं (मन्माहात्म्यपरं) दशकम् ।

२. कण्डोम् कण्डोम् कण्डोम्—

भक्ता भूमितलेऽत्र दिव्यतुलसीमालाञ्चितं माधवं
गायन्त्येव हि नर्तनैश्च परितस्सञ्चारशीला अपि ।
दृष्टं दृष्टमिदं हि दृष्टमतुलं भोग्यं समृद्धं पदं
तं नन्तुं च पुनःपुनः प्रथयितुं भक्तास्समागच्छत ॥

३. तिरियुम् कलियुगम् नीङ्गि—

शीलव्यत्ययकारि तत् कलियुगं नष्टं स्वयं सूरय-
स्सर्वे चात्र भुवि प्रविश्य च महद्दिव्यं युगं संश्रिताः ।
प्रख्यातं कृतमेव मोदभरिता नीलाब्दवर्णं हरिं
तं नाथं गुणसागरं हि परितो गायन्ति भक्ता भुवि ॥

४. इडङ्कोळ् शमयत्ते—

सर्वत्र प्रततां च दुर्मततिं चोन्मूलयन्तो यथा
तेऽमी भक्तगणास्तथाऽब्धिशयनं नाथं स्तुवन्तो हरिम् ।
सर्वत्रापि भवन्ति हन्त ! शयितास्तत्रोपविष्टास्स्थिता-
गीतैस्तैर्विविधैश्चरन्ति परितो नृत्तैश्च नाट्यान्विताः ॥

५. शेयूकिन्नदेन् कण्णुक्कोने—

तत्त्वं भाति हि पश्यतो मम शुभं त्वेकं परं सर्वतो
वैकुण्ठस्य हरेस्तु भक्तनिवहा आश्चर्यवृत्तास्स्वयम् ।
हत्वा चाप्यसुरांस्तु वो भुविभवान् पापान् विपर्यासतः
कालं चात्र हि भेदयन्ति भवतां नात्र स्थितिस्स्याद्ध्रुवम् ॥

६. कोन्नयिरुण्णुम् पिणादि—

हत्वा प्राणविनाशकाः किल महाव्याधिश्च वैरी क्षुधा
चेति क्रूरगणा भुवीति हि हरेश्श्रीचक्रपाणेर्विभोः ।
भक्तास्तद्गुणगाननृत्तसहितास्सर्वत्र सञ्चारिणो
दृश्यन्ते चपलास्तु यूयमपि तान्नत्वा स्त चोज्जीविताः ॥



७. निरुत्तिनुम्मुळत्तुक्कोळ्ळुम्—

युष्माकं हृदयं प्रविश्य सुदृढा या देवतास्ता अपि
श्रीशं प्राप्य फलप्रदास्तदिह साक्ष्यास्ते मृकण्ड्वात्मजः ।
दृष्ट्वैवं बत निश्चिते हि मलिनं माऽस्त्वेव चित्तं तु वः
कृष्णायैव परन्तु दैवमखिलं तद्विग्रहेष्वर्प्यताम् ॥

८. इरुक्कुमिरैयिरुत्तुण—

कर्तव्यामपि कृत्यसन्ततिममी देवा भजन्तु स्वयं
चाराध्या जगतीति मूर्तिसरणिं स्वीयां हरिस्स्थापयन् ।
देवानामधिदेव एव जयति श्रीवत्सवक्षाश्च तं
गीतैर्नृत्तयुता भजन्ति विमलास्तान् प्राप्य धन्यास्स्त भोः ॥

९. मेवित्तोळुदुय्मिनीर्कळ्—

वेदस्थामपि सूक्तिसन्ततिममी वाचा पठन्ति स्वयं
शुद्धां भक्तियुताश्च धूपकुसुमैर्दीपैश्च गन्धोदकैः ।
आराध्याच्युतमेव दास्यनिरताः केचिच्च योगान्विता-
दृश्यन्ते भुवि तान् प्रणम्य भवत प्राप्यानिहोज्जीविताः ॥

१०. मिक्कवुलकुकळ्तोरुम्—

रुद्रश्चापि चतुर्मुखश्शतमखश्चान्येऽपि देवास्स्वयं
कृष्णं श्रीशमिमं प्रपद्य शरणं लोकेषु सर्वत्र च ।
प्राप्तास्सम्पदमुत्तमां किल तथा हे चञ्चलास्तं हरिं
यूयं च प्रणमेत चेत्कलियुगं नैवास्ति कुत्रापि वः ॥

११. कलियुगमोन्रमिन्रिक्के—

भक्तानां न भवेद्यथा कलियुगं त्राता तथा श्रीहरिः
कृष्णो भाति दयानिधिश्च परमं ज्योतिश्च मायी प्रभुः ।
स्तोतुं तं शठजित्सहस्रमवदत्कारीशसूनुर्मुनि-
र्माराख्यस्तदिदं च तत्र दशकं दोषच्छिदन्तर्हृदि ॥

## अथ पञ्चमशतके

### ३. तृतीयदशकम् (माशरु शोदि)

( श्रीशठारेर्नायिकावस्था ) ( सखीसम्बोधनम् )

१. माशरु शोदि—

माणिक्याद्रिमसुं प्रभुं मम हरिं बिम्बाधरं श्रीधरं
ज्योतिर्निर्मलमादिमूर्तिमनघं सौशील्यवारान्निधिम् ।
अन्विष्यानिशमस्मि हन्त नितरां श्रान्ता स्वयं कर्शिता
किं मे स्यात्सखि निन्दनैकमनसां जल्पैर्जनानां भुवि ॥

२. एन् शेय्युमूरवर्कव्वै—

पद्माक्षः किल मां विजित्य नितरां भाति स्वयं चोज्ज्वल-
स्तत्संश्लेषविवर्जिताऽस्मि वपुषि ग्लान्या भृशं कर्शिता ।
वक्त्रे नेत्रयुगे च मे धवळता चास्त्येव वैवर्ण्यतः
किं वा स्यात्सखि नः प्रजल्पवचनैर्लोके नृणां मौढ्यतः ॥

३. ऊर्न्द शकडमुदैत्त पादत्तन्—

श्रीनाथश्शकटप्रभञ्जनपदो मायात्मिकां पूतनां
हन्तुं स्तन्यरसप्रयुक्तवदनो मामद्य हि क्रीतवान् ।
भूयो भूय इहोक्तिसन्ततिमहं वच्मि स्वयं तत्परां
नान्यां प्राणसखि प्रिये किमिह मे कुर्यान्नृणां निन्दनम् ॥

४. ऊरवर्कव्वै—

लोकानां परिवाददोहदभरान्मातुर्वचश्चोदकं
धारारूपमिदं प्रकल्प्य नितरामुप्त्वा च कामात्मकम् ।
बीजं क्षेत्रसमे मनस्यतितरां संवर्ध्य नानाविधा-
माशां पूरयिताऽम्बुदः किमिह मे कृष्णोऽस्ति निन्द्यस्सखि ॥



५. कडियन् कोडियन् नेडियमाल्—

क्षिप्रं कार्यकरोऽस्त्ययं दृढमतिस्सर्वेश्वरश्श्रीधरो
लोकानां वशकृच्च वञ्चकतमस्सर्वात्मचेतोऽतिगः ।
सौन्दर्येण च मोहनोऽयमिति मे चित्तं तमेवाश्रितं
किं कुर्यां सखि सुन्दरीह जननीबाचाऽद्य किं मे भवेत् ॥

६. अन्नैयेन् शेय्यिलेन्—

हे सख्यः प्रथमस्य सूरिसरणेश्श्रीद्वारकाधीशितुः
पाशेऽहं कलितास्म्यहो मणिनिभश्रीवासुदेवात्मनः ।
आशा माऽस्तु ततोऽत्र मां प्रति तु वः किं मातृकृत्याद्भवेत्
किं स्यात्पौरजनप्रवादवचनात् सर्वं वृथा भाति मे ॥

७. वलैयुळकप्पडुत्तेन्नै—

पाशैर्मां च निबद्ध्य मेऽत्र हृदयं जित्वा स्वयं वारिधौ
यश्शेते स्म मम प्रभुस्तमतुलं श्रीचक्रपाणिं हरिम् ।
दृष्ट्वाऽऽन्नां सखि चक्षुषैव मुदितौ पश्यत्सु नारीजने
ष्वेवं निन्दनतत्परेषु शिरसा किं तं च वन्देवहि ॥

८. पेय्मुलैयुण्डु—

पीत्वा स्तन्यमहो निहत्य च महामायां तु तां पूतनां
चूर्णीकृत्य च तं खलन्तु शकटं निर्मूल्य वृक्षार्जुनौ ।
वक्त्रं चापि विदार्य हे सखि बकस्यासीद्व्रजं यो जयन्
तं पश्येम कदा वयन्तु जननीलज्जावहास्ससस्मितम् ॥

९. नाणुम् नि रैयुम् कवर्न्दु—

हृत्वा मे सकलां त्रपां च विनतिं चेतोऽपि भव्यं मम
श्रीशस्सूरिवरप्रभुर्दिवि महानास्ते हि भव्यं सखि ।
सत्यं त्वां हि शपे समस्तजगतां प्रख्यापयामि स्वयं
तं मे वञ्चकमद्य सर्वविधिभिर्धृष्ण त्ववद्यावहा ॥

१०. यामडल्न्दुम्—

लज्जां चापि विहाय वीथिसरणिष्वेनन्तु नारीजना-
स्सर्वे हन्त ! विनिन्द्य वञ्चकमहो कान्तं शपेयुर्यथा ।
सत्यं हन्त ! तथा भवेयमपि चावद्याश्रया निस्त्रपा
धर्तुं श्रीतुलसीस्रजं मम विभोः कान्तस्य वै चक्रिणः ॥

११. इरैक्कुम् करुक्कडल्वण्णन्—

गम्भीराम्बुधिवर्णमच्युतममुं कृष्णं प्रभुं श्रीधरं
स्तोतुं श्रीकुरुकापुरप्रभुरहो दिव्यां शठारिर्जगौ ।
साहस्रात्मकरम्यपद्यसरणिं त्वन्तादिरूपां शुभां
तत्रेदं दशकं पठन्ति भुवि ये तेषां पदं स्यात्परम् ॥

---

## अथ पञ्चमशतके

४. चतुर्थदशकम् ( ऊरेल्लाम् तुञ्जि )

नायिकावस्थायां विरहवेदना । )

१. ऊरेल्लाम् तुञ्जि—

सुप्ताः पौरजनाः किलाद्य सकलास्सर्वत्र रात्रिस्त्वियं
गाढान्धं तम एव भाति सलिलान्यद्य प्रशान्तानि हि ।
दीर्घा रात्रिरियं दिवानिशमपि व्याप्ता जगद्रक्षको
विष्णुश्शेषशायी न मामयमुपैत्याः कोऽद्य मे रक्षकः ॥



२. आवि काप्पारिनि यार्—

अब्धिं भूमितलं किलाद्य गगनं सर्वं च रात्रिस्त्वियं
व्याप्यातीव तमोमयी च विकृता दीर्घाऽस्त्यहो सर्वतः ।
कृष्णो नीलमणिप्रभस्तु न हि मामायात्यहो पापिनीं
हे चित्त त्वमपीह तद्वशतया नैवानुकूलं मम ॥

३. नीयुम् पाङ्गल्लै काण् नेञ्जमे—

हे मच्चित्त! न मेऽनुकूलविषया भासि त्वमप्यद्य हा
रात्रिश्चाद्य युगायते निरवधिश्शार्ङ्गी तु नायाति माम् ।
काकुत्स्थो हरिरच्युतः प्रबलदुष्कर्मावृतां हन्त हा
नारीजन्मवशा त्वहं न किल मे पश्यामि रीतिं मृतेः ॥

४. पेण्पिरन्दारेय्दुम्—

द्रष्टुं नैव सहेऽद्य दुःखममितं नारीजनानामिति
क्वापि श्रीदिनकृच्च लीन इह मे दृश्यो न नीलाम्बुदः ।
पद्माक्षो हरिरच्युतोऽप्यवनिजाबिम्बाधरो वामनः
को वा हन्त मनोऽतिगां च महतीं चिन्तारुजं मे हरेत् ॥

५. आरैयाराय्वार्—

किं मे स्यादिति नैव हन्त जननीवर्गास्सखीनां गणाः
पृच्छन्त्यद्य निशासु दीर्घसमयास्वेते हि सुप्तास्स्वयम् ।
नीलाम्भोदतनुर्हरिर्मम विभुः कृष्णोऽद्य नायात्यहो
पापिन्या मम नाम शेषयति मां को वाऽद्य मामुद्धरेत् ॥

६. पिन्निन्न कादल्नोय्—

पश्चान्मामनुयाति कामरुगियं चित्तं तु सम्पीड्य मे
रात्रिर्मे पुरतोऽस्ति कल्पसदृशी चक्षुस्तिरोधाय मे ।
चक्री मे प्रभुरद्य मां न समुपैत्याः कोऽद्य सर्वात्मना-
ऽप्येवं निर्गतिकं तु पालयति मे जीवं दशायामिह ॥

७. काप्पारारिव्विडत्तु—

को वा स्यादिह रक्षिता मम निशा सेयं हि दीर्घा स्वयं
भात्येवाद्य तु कल्पवत्स तु हरिर्नायाति मां मत्प्रियः ।
दीप्तश्वेतसुशङ्खचक्रभृदहो पापानि मे दाहका-
न्येवं तापकराणि हन्त किमहो कुर्यामहं देवताः! ॥

८. देय्वङ्गाळेन् शेय्केन्—

देवाः! किं करवाणि रात्रिरधुना मे सप्तकल्पायते
प्राणान् मे कृशयत्यहो बहुतमामग्रे भवन्ती स्वयम् ।
नायात्येव मम प्रभुः प्रियतमः कृष्णस्तु चक्री हरि-
र्मामन्विष्य हि चन्द्रिकाऽपि दहति ज्वालामयी भाति मे ॥

९. वेम् शुडरिल् तानडुमाल्—

सेयं हन्त निशा हि सान्द्रतमसा शीता हिमेनावृता-
ऽप्येवं मां दहति स्वयं दहनवन्नाद्यापि दृश्यो रथः ।
भानोरुत्तमतेजसा मम विभुः कृष्णस्तु नायात्यहो
पद्माक्षः किल भाग्यवानिह महत्को मेऽद्य दुःखं हरेत् ॥

१०. निन्ररुकुकिनूने पोल—

सन्तप्ता यदहं द्रवीकृततनुस्सेयं च रात्रिस्तथा-
ह्याकाशे तुहिनद्रवैरुपगता भात्येव दीर्घा स्वयम् ।
लोकान् पादतलेन यः प्रभुरहो चक्राम पूर्वं हरि-
र्नायात्येव स इत्यपीह न वदत्येवं हि सुप्तं जगत् ॥

११. उरङ्गुवान् पोल्—

क्षीराब्धौ शयितं च योगशयनं नाथं हरिं श्रीधरं
स्तोतुं श्रीकुरकापुरप्रभुरयं चक्रे शठारिर्मुनिः ।
साहस्रं शुभमुत्तमं सुरुचिरं त्वन्तादिरूपं सुधी-
स्तत्रेदं दशकं शरीरविरहे दिव्यं पदं प्रापयेत् ॥

---



# अथ पञ्चमशतके

## ५. पञ्चमदशकम् ( एङ्गनेयो अन्नैमीर्काळ् )

( तिरुक्कुरुङ्गुडि स्वामिपरम् नायिकावचनम् । )

१. एङ्गनेयो अन्नैमीर्काळ्—

मां किं निन्दथ यूयमद्य जननीवर्गाः! प्रियं सुन्दरं
दृष्ट्वा पूर्णममुं १ कुरङ्गनगरीनाथं कुलेन्द्रं च नः ।
चित्तं मे ननु शङ्खचक्रयुगळे बिम्बाधरे श्रीहरे-
र्नेत्राम्भोजयुगे च सक्तमनिशं तैरेव याति स्वयम् ॥

२. एन्नेञ्जिनाल् नोक्कि—

मन्निन्दान्तु विहाय मेऽद्य मनसा यूयं च भो पश्यत
श्रीशं पूर्णममुं कुरङ्गनगरीनाथं हि दृष्ट्वा मम ।
सर्वत्रापि पुरश्चकास्ति सततं यज्ञोपवीतं शुभं
विष्णोस्तस्य च कुण्डलं (२)भुजयुगे श्रीवत्सभूषादिकम् ॥

३. निन्निडुम् तिशैक्कुम्—

स्तब्धा तिष्ठति च भ्रमान्धहृदया शैथिल्यवश्या स्वयं
चेत्येवं किल मान्तु निन्दथ जनन्योऽद्ययायितैरुन्नतैः ।
प्रासादैर्भरितां कुरङ्गनगरीं शास्तुर्हरेर्दर्शनात्
पश्चाच्छार्ङ्गगदासिचक्रजलजान्येवाग्रतो मे सदा ॥

---

(१) " तिरुक्कुरुङ्गुडि " इति नामधेयमस्य नगरस्य व्युत्पत्ति-मन्यामेव प्रकाशयति । तथाऽपि संस्कृतशैलीसौकर्यार्थमत्र " कुरुङ्गनगरी " इति नामधेयं कल्पितम्-शब्दसाम्यात् अनेन झडिति स्फूर्तिर्भवेदिति ।

(२) भुजचतुष्टयम् ।

४. नीङ्गनिल्लाक्कण्णनीर्कळ्—

नैषा बाष्पवियुक्तनेत्रयुगळेत्येवं हि मां मातरो!
यूयं चापि विनिन्दथ प्रियममुं दृष्ट्वाऽस्मि मुग्धा हरिम् ।
श्रीशं दिव्यकुरङ्गरम्यनगरीनाथं हि तस्मादहो
दिव्यस्रङ्मकुटाङ्गपट्टवसनं दामादि पार्श्वे मम ॥

५. पक्कम् नोक्किनिर्कुम्—

पार्श्वं पश्यति चास्ति हन्त शिथिलेत्येवं हि मां मातरो!
यूयं निन्दथ दिव्यकीर्तिमनघं दृष्ट्वा हरिं श्रीधरम् ।
मुग्धाऽहं हि कुरङ्गरम्यनगरीनाथं ममात्मन्यहो
तस्याऽऽस्ते ह्यधरोऽपि बिम्बसदृशो भ्रयुग्मनेत्राम्बुजम् ॥

६. मेलुम् वन् पळिनङ्कुक्कि—

अस्माकं कुलपांसनीयमिति मां माता स्वयं वारय-
त्येव श्रीहरिदर्शनादहमहो मुग्धाऽस्मि दृष्ट्वा च तम् ॥
श्रीशं दिव्यकुरङ्गरम्यनगरीनाथं ममास्ते हृदि
श्रीनासाऽक्षियुगाधराङ्गरुचिभिस्साकं चतुर्बाहुभिः ॥

७. नि रैन्दवन् पळि—

अस्माकं हि कुलस्य हन्त कुरुते सेयं कळङ्कं त्विति
द्रष्टुं तं किल नावकाशमधुना माता ददात्यत्र मे ।
धन्याऽहं हि कुरङ्गरम्यनगरीनाथस्य सन्दर्शना-
न्मय्येवास्ति स तेजसां निधिरहो दिव्याकृतिश्चक्रभृत् ॥

८. कैयुळ् नन्मुकम् वैक्कुम्—

हस्ते हन्त करोति वक्त्रममलं शैथिल्यवश्या त्वियं
चेत्येवं किल मान्तु निन्दथ जनन्योऽद्यापि यूयं वृथा ।
दृष्ट्वाहं हि कुरङ्गरम्यनगरीनाथं वशाऽस्यैव य-
द्दिव्यं लोचनपद्मकेशकटिबाह्वाद्यं पुरो भाति मे ॥



९. मुनिन्नायेन्न तोलिमार्कळुम्—

अये त्वं कथमद्य भासि च नृणामित्येव निन्दन्ति मां
तेऽमी हन्त ! सखीजनाश्च जननीवर्गा भवन्तोऽधुना ।
दृष्ट्वा रम्यकुरङ्गदिव्यनगरीनाथं हि धन्याऽस्मि मे
चित्तं न त्यजतीक्षुदुग्धमधुरो भूषान्वितो मौळिभृत् ॥

१०. कळियमिक्कदोर्कोदलळिवळ्—

सेयं कामवशेति मान्तु जननी तद्दर्शनाद्वारय-
त्येवं हन्त कुरुङ्गदिव्यनगरीनाथं हि दृष्ट्वाऽस्म्यहम् ।
देवैस्सूरिवरैश्च सेव्यमतुलं तेजोमयं तद्वपु-
श्चित्ते मे सततं चकास्ति तदिदं वेद्यं हि नान्यैरहो ॥

११. अरिवरियपिरानै—

ज्ञातुं दुश्शकमच्युतं हि जगतां नाथं हरिं श्रीधरं
स्तोतुं चक्रधरं च दिव्यकुरुकापुर्याश्शठारिः प्रभुः ।
साहस्रं शुभदिव्यपद्यकुसुमावळ्यात्मकं व्यातनो-
त्तत्रेदं दशकं कुरङ्गपुरगं ज्ञात्वा जना वैष्णवाः ॥



## अथ पञ्चमशतके

### ६. षष्ठदशकम् ( कडल् ञालम् )

( अत्र नायिकाया अवस्था तन्मात्रा वर्ण्यते । )

१. कडल् ञालम् शेय्देनुम्—

पृथ्वीं पयोनिधिवृतामहमेव कृत्वा
पृथ्वी पयोनिधिवृताऽप्यहमस्मि सत्यम् ।
पृथ्वीं पयोनिधिवृतां यदहं गृहीत्वा
पृथ्वीं पयोनिधिवृतां धृतवत्यहं हि ॥

पृथ्वीं पयोनिधिवृतामहमेव भुक्त्वा
वर्ते किलेति जगदीश्वरसम्प्रविष्टा ।
सेयं सुता मम कथं भवतीह लोके
युष्मान् वदानि कथमद्य चरित्रमस्याः ॥

२. कर्कुम् कल्विक्कु—

विद्यासु चास्म्यनवधिः किल सीमभूमि-
र्विद्यात्मिकाऽपि सकला त्वहमेव सत्यम् ।
विद्यां किलाहमखिलां स्वयमेव कृत्वा
विद्यामहार्षमखिलामहमेव चान्ते ॥
विद्यासु सारतमम्प्यहमस्मि सत्यं
चेत्येव वक्ति तनया मम सम्प्रविष्टा ।
विद्येश्वरेण हरिणा कथमद्य युष्मान्
विद्याश्रयान् किमिति वच्मि कथामिहास्याः ॥

३. काण्किन् निलमेल्लाम्—

दृश्या किलास्मि पृथिवी सकलाऽहमेव
दृश्यं किलाहमखिलं गगनं स्वयं तत् ।
दृश्योऽपि हन्त दहनोऽप्यहमेव चोष्णो
दृश्योऽपि वायुरखिलोऽस्म्यहमेव सत्यम् ॥
दृश्योऽपि वारिनिधिरस्म्यहमेव सर्व-
श्चेत्येव वक्ति तनया मम सम्प्रविष्टा ।
दृश्येन चाम्बुनिधिवर्णयुतेन तेने-
त्येवं किमद्य चरितं तु वदानि वोऽस्याः ॥



४. शेय्किन् कितियेल्लाम्—

कृत्यं च सर्वमहमेव हि वर्तमानं
कृत्यं च भावि सकलं त्वहमेव सत्यम् ।
कृत्यं च भूतमखिलं त्वहमेव सत्यं
कृत्यावळेश्च फलभुक् स्वयमेवचास्मि ॥
कर्त्रावळीं च सकलामहमेव कृत्वा
वर्ते किलेति तनया मम वक्ति मुग्धा ।
श्रीपुण्डरीकनयनेन हि सम्प्रविष्टा
वृत्तं कथं बत वदानि च कोमलाङ्ग्याः ॥

५. तिरम्बामल् मण्काक्किनेन्—

आज्ञां प्रचार्य पृथिवीं परिपालयामि
स्वैरं गिरिं तमचलं समधारयं प्राक् ।
सर्वासुरावळिमहं न्यहनं पुरा तां
तान् पाण्डवानपि च तन्त्रगिराऽप्यरक्षम् ॥
सङ्कल्पसिद्धिविधये जलधिं प्रमथ्य
स्वाभीष्टभागहमितीह सुताऽद्य वक्ति ।
सेयं ममाम्बुधिनिभेन हि सम्प्रविष्टा
किं वाऽद्य वच्मि तनयां प्रति वोऽम्बुजाक्षीम् ॥

६. इनवेय्मलैयेन्दिनेन्—

गोवर्धनोद्धरणकृत्स्वयमेव चाहं
सप्तर्षभानपि विनाश्य जगत्प्रसिद्धा ।
क्षेत्रेषु वत्सनिवहानपि वासयन्ती
सर्पानहं पशुगणानपि तानरक्षम् ॥
गोपालबालनिवहाधिपतां गताऽहं
त्वित्येव वक्ति तनया मम सम्प्रविष्टा ।

देवेश्वरेण खलु तेन कथं वदेयं
शीलन्तु वोऽद्य ललिताङ्ग्य इहोत्पलाक्ष्याः ॥

७. उत्तार्कळेनक्किल्लै यात्म्—

नैवात्र बान्धवजना मम सन्ति लोके
सर्वेऽत्र बान्धवजना मम सन्ति चेति ।
सर्वान् करोमि मम बन्धुजनान् किलाहं
मामाश्रितानपि फलैकरतांस्त्यजामि ॥
मामेवं संश्रितवतामहमस्मि बन्धु-
रित्येव वक्ति तनया मम सम्प्रविष्टा ।
मायामयेन हरिणा किल निस्समेन
किं वो वदामि वचसा वचनं कृशाङ्ग्याः ॥

८. वैक्किन् मुक्कण्पिरान्—

सोऽपि त्रिणेत्र उदितस्स्वयमस्मि चेश-
स्सोऽपि स्वयं किल चतुर्मुख एव चास्मि ।
देवाश्च ते स्वयमहं जगति प्रसिद्धा-
देवेश्वरोऽपि विदितस्स्वयमेव चाहम् ॥
तेऽपि स्वयं च मुनयः प्रथिताः किलाहं
त्वित्येव वक्ति तनया मम सम्प्रविष्टा ।
नीलाम्बुदाभवपुषा हरिणाऽद्य किं वा
युष्मान् वदानि चरितं मम कोमलाङ्ग्याः ॥

९. कोडियविनै यादुमिलने—

कर्मादिदोषरहिता स्वयमस्मि चाहं
सर्वात्मकर्मसरणिस्स्वयमस्मि चाहम् ।
दुष्कर्मराशिजननी स्वयमेव चाहं
दुष्कर्मबन्धततिमोक्षकरी च साऽहम् ॥



दुष्टाश्रितामहमनाशयमेव लङ्का-
मित्येव वक्ति तनया मम सम्प्रविष्टा ।
तार्क्ष्यध्वजेन हरिणा खलु किं वदेयं
वेषानिहाद्य भुवि वो बत मे लताङ्ग्याः ॥

१०. कोलङ्कोळ्शुवर्क्कमुम्—

भोग्यं स्वयं दिविषदां पदमप्यहं हि
क्लेशास्पदं च नरकं त्वहमेव चास्मि ।
मोक्षोऽप्यनन्तसुखदः परमोऽहमेव
स्वांशैरहं हि सकला अपि जीववर्गाः ॥
सर्वस्य मूलमपि चास्म्यहमेव चाद्यं
त्वित्येव वक्ति तनया मम सम्प्रविष्टा ।
दिव्याम्बुदाभवपुषा हरिणा किलाहं
किंवोऽद्य वच्मि तनयां प्रति मे सुकेशीम् ॥

११. कुन्दल्मलमैङ्गैक्कुम्—

लक्ष्म्याः प्रियं च पतिमच्युतमत्र भूम्याः
नीळाप्रियं च हरिमेव हृदि प्रपद्य ।
स्तोतुं शठारिरतनोत्कुरुकापुरेशो
दिव्यां सहस्रशुभपद्यततिं हि हृद्याम् ॥
तत्रान्तरङ्गहरिकिङ्करवृत्तिबोधि
श्रेयः पठन्ति भुवि ये दशकं त्विदं ते ।
लोकेऽत्र भाग्यमपि भोग्यतमं प्रपन्ना-
श्श्रीशस्य भक्तनिवहानपि पूजयन्ति ॥

———0———

## अथ पञ्चमशतके

### ७. सप्तमदशकम् ( नोत्तनोम्बिलेन् )

( अत्र श्रीवरमङ्गलनगराधीश्वरविषये भक्तिपारवश्यं प्रकाश्यते )

१. नोत्त नोन्बिलेन्—

नाहं कर्मविदां वरो न च हरे श्रीज्ञानयोगान्वितो
विष्णो त्वद्विरहं तथाऽपि न सहे जातु स्वयं श्रीपते ।
स्वामिन् शेषशय प्रकाशिततनो श्रीपङ्कजत्रीहिभि-
र्दीप्रे श्रीवरमङ्गलाह्वयपुरे नैवास्मि तेऽहं बहिः ॥

२. अङ्गुतेनल्लेनिङ्गुतेनल्लेन्—

नाहं तत्र भवामि नात्र च भवाम्याशावशोऽहं तव
प्राप्त्यै नैव भवामि कुत्र चिदपि श्रीमन् हरे मे प्रभो ।
लङ्काध्वंसक चन्द्रसङ्गिमणिसौधावल्युपेते वसन्
दिव्ये श्रीवरमङ्गलाह्वयपुरे चक्रिन् प्रसन्नो भव ॥

३. करुळप्पुळ्कोडि—

हे ताक्ष्यध्वज चक्रभृच्च परमव्योमेश्वर श्रीधर-
स्त्वं नीलाम्बुदसन्निभोऽसि कृतवान् सन्तं ह्यसन्तं हि माम् ।
कैङ्कर्यं परिगृह्य मे विजयसे दिव्ये चतुर्वेदवि-
द्वासे श्रीवरमङ्गलाह्वयपुरे नाहं कृतज्ञस्त्वयि ॥

४. माछशेर्पेडैनूलुवर्मङ्ग—

सङ्घीभूतशतारिसैन्यमथनस्त्वं पाण्डवान् पञ्च तान्
मायायोधनकृत्प्रपाल्य च रिपून् धूळीकृतांश्चाकरोः ।
स्वामिन् भूमिसमुद्धृतिं च कृतवां स्त्वं वैदिकाराधितो
दिव्ये श्रीवरमङ्गलाह्वयपुरे भासि क्व वा त्वां भजे ॥



५. एय्वक्कूवुदलावदे—

त्वत्प्राप्त्यै किमहं च साधनपरस्स्यां त्वं हि मायाविनां
मध्ये कृत्रिमचेष्टितोऽम्बुदनिभस्स्वामिन्नभूः ख्यातिमान् ।
लोकेऽस्मिन् कृतकृत्यतामुपगतैस्सेव्ये च दिव्ये वसन्
शेषी श्रीवरमङ्गलाह्वयपुरे दृष्टं मयाऽपि स्वयम् ॥

६. एनमाय् निलम् कीण्ड—

वाराहो धरणीसमुद्धरणकृत्त्वं मेऽसि नाथो हरे
कृष्ण त्वं मम दास्यमेतदखिलं माणिक्यवर्णावृणोः ।
सूरीन्द्राधिप सद्रसालमधुरे सेव्योऽस्यहो शीतले
दिव्ये श्रीवरमङ्गले निवसतां मां पश्य दिव्याचल ॥

७. वन्दरुळियेन्नेञ्जिडङ्कोण्ड—

आगत्यात्र हृदीह मे वससि भो देवाधिदेवाच्युत
श्रीशस्त्वं जगतां प्रसूरपि पिता लोकान् किलाभक्षयः ।
सेव्यस्त्वं किल वैदिकैस्सुचरितैर्निस्सीमकीर्तिर्हरे
दिव्ये श्रीवरमङ्गलाह्वयपुरे मां न त्यजेर्जातु चित् ॥

८. अकल नी वैत्त मायम्—

विश्लेषाय ममेन्द्रियाणि च सृजन् पञ्चापि मायामया-
न्येवं किं कुरुषे च मज्जयसि किं दुस्सङ्गमोहाम्बुधौ ।
भास्वच्छ्रीमणिसौधराजिरुचिरे दिव्ये स्वयं भ्राजसे
नाथ श्रीवरमंगलाह्वयपुरे गुप्तो बकध्वंसकः ॥

९. पुळ्ळिन् वायिपळन्दाय्—

श्रीमन् हे बकवक्त्रदारक विभो द्वन्द्वार्जुनध्वंसक
स्वामिन् सप्तवृषप्रभञ्जक तव प्रेक्ष्याऽस्मि मायिन् गुणान् ।
दुर्ज्ञेयानिह विस्मितोऽस्मि महसा माणिक्यनीलोऽस्यहो
दिव्ये श्रीवरमङ्गले श्रुतिविदां वासे कृपां मे कुरु ॥

१०. आरेनक्कु निन् पादमे शरणाक—

त्वत्पादाम्बुजयुग्ममेव शरणं कृत्वाऽसि मे रक्षक-
स्तेऽहं नास्मि किलोपचारकृदहो वश्यो ममात्माऽपि ते ।
व्रीहीक्ष्वादिफलाश्रये च रुचिरे दिव्यं स्वयं शीतले
भास्वन् श्रीवरमङ्गले विजयसे देवेश मौळ्युज्ज्वल ॥

११. देय्वनायकन्—

देवेशाच्युत हे त्रिविक्रम हरे नारायण श्रीधर
स्वामिन्नित्ययमुत्तमं हि कुरुकापुर्याश्शठारिः प्रभुः ।
स्तोतुं चाह सहस्रमत्र दशकं चेदं विदुर्ये भुवि
प्राप्यं श्रीवरमङ्गलं प्रति पुरं ते सूरिभोग्या दिवि ॥

---

## अथ पञ्चमशतके

### ८. अष्टमदशकम् ( आरावमुदे )

( अत्र फलसिद्धिमप्राप्तश्शठारिः श्रीकुम्भपुर्यां(तिरुक्कुडन्दै)
पूर्णामृतस्वामिसन्निधावार्तिसहितः प्रपत्तिं
करोति । )

१. आरावमुदे—

स्वामिन् पूर्णामृत त्वत्पदकमलयुगे भक्तिहर्षप्रकर्षा-
न्नित्यं सत्यं द्रुतं स्यान्मम वपुरखिलं संस्रवत्येवं दास्यात् ।
श्रीमत्यां कुम्भपुर्यां सुरुचिरबहुलव्रीहिसंवीजितायां
दिव्यालङ्कारशय्यामधिशयितमिदं तेऽद्य रूपं हि दृष्टम् ॥



२. एम्माने येन् वेळ्ळैमूर्ति—

मन्नाथ त्वं शुभाङ्गो मम पतिरखिलानन्तरूपोऽसि दिव्य-
श्रीमद्रम्याकृति श्रीवृषभ शुभमहाम्भोजसौम्याम्बुराशौ ।
श्रीमत्यां कुम्भपुर्यां मधुभरितसरोजाक्ष निद्रासि नाथ
त्वद्भक्तोऽहं किमद्य स्वयमिह करवै ब्रूहि विष्णो दयाळो ॥

३. एन्नान् शेयकेन्—

किं वा कुर्यां ममाद्य स्वयमवनरतः कोऽस्ति किं वा करोषि
त्वत्सान्निध्याद्विनाऽहं न किमपि च कुतोऽप्यर्थये वाञ्छितं मे ।
श्रीमत्यां कुम्भपुर्यामतिदृढवलयैरावृतायां शयान
त्वत्पादाब्जे तु भक्त्या कुरु मम भरितान् वासरानप्यशेषान् ॥

४. शेलक्काणिकर्पार—

माहात्म्यं तेऽस्त्यपारं विशदमतिजुषां दिव्यदृष्टेरतीतं
निस्सीमं सर्वलोकात्मकनिजवपुषा दिव्यमूर्ते विभासि ।
कुर्वेऽहं कुम्भपुर्यां सुमहितभगवद्भक्तवर्गाश्रितायां
सुप्तं त्वां द्रष्टुकामो गगनमपि विलोक्याञ्जलिं क्रन्दनं च ॥

५. अलुवन् तोळुवन्—

क्रन्दाम्येवार्चयामि स्वयमहमनिशं नर्तनैश्चापि गानै-
श्श्रान्तोऽस्मि त्वां दिदृक्षुर्मम कलुषभरात्पार्श्वतो लज्जितस्स्याम् ।
रम्यायां कुम्भपुर्यां सुरुचिरमहितक्षेत्रसस्यावृतायां
पद्माक्ष त्वां शयानं श्रितमिममधुना तारय त्वं हरे माम् ॥

६. शूलकण्डाय्—

सूरीन्द्रः कुम्भपुर्यां वसति किल भवान् भाग्यवद्भिस्सुसेव्य-
श्श्रोत्रस्यात्यन्तभोग्यामृतनिधिरुचितं सत्फलं मानसस्य ।
सिंह श्रेष्ठ त्वदीयं पदयुगळमहं प्राप्तुमप्यर्ह एवं
दुष्टाशाघोरकूपे निपतित इति यन्मे कदा वोद्धृतिस्स्यात् ॥

७. अरियैरेयेन्नम्—

सिंहेन्द्र त्वं सुरम्यं कनकमयमहाज्योतिरेवासि सत्यं
पद्माक्षो नीलमेघो रिपुकुलदहनस्त्वं प्रवाळाद्रिरेव ।
स्वामी मे त्वं चतुर्बाहुनुगुणविभवस्त्वत्कृपा मेऽस्ति दास्ये
श्रीश त्वं कुम्भपुर्यां विलससि न सहे हन्त मुक्तिं प्रदेहि ॥

८. कलैवाय्तुम्बम्—

मायी त्वं चक्रपाणिर्विलससि भगवन् कुम्भपुर्यां शयानः
किं दुःखं नाशयेर्मे किमुत न च तथा नास्ति चान्यागतिर्मे ।
देहान्मत्प्राणयाने न भवतु पतनं मे मुरारे पदाब्जे
भद्रं ते मे शरण्यं वितरतु च भवान् नित्यसेव्यं च भोग्यम् ॥

९. इशैवित्तेन्नै—

त्वत्पादाब्जप्रणम्रं कुरु मयि कृपया मां च देवाधिदेव
श्रीमानस्यादिमूर्ति स्सुरुचिरमणिभृत्कुम्भपुर्यां शयानः ।
निश्शङ्कं लोकशास्योऽस्यपि तव गमनं रम्यगम्भीरभावं
द्रष्टुं मेऽस्त्यद्य काङ्क्षा त्यज तव शयनं देहि मे दृष्टिभाग्यम् ॥

१०. वारावरुवाय्—

मायामूर्तिस्त्वदृश्योऽस्यपि मम हृदये भासि माधुर्यपूर्ण-
स्सत्यं पूगामृतात्मा सकलकलुषसन्तापहन्ताऽन्तरात्मा ।
मन्नाथः कुम्भपुर्यां विलसितविभवस्त्वं मुरारे कथं वा
त्वत्पादाब्जं प्रपन्नोऽप्यहह भवभयाम्भोधिमग्नो भवेयम् ॥

११. उळलैयेन्निल्—

कृष्णस्यैवाङ्घ्रियुग्मं शरणमनुकलं पूतनाप्राणहन्तु-
स्सम्प्राप्यासौ शठारिर्मुनिरिह कुरुकापत्तनेशः कवीन्द्रः ।
वेणुक्वाणातिरम्ये दशकमिदमपि प्राह दिव्यं सहस्रे
ये जानन्तीदमार्याः प्रतिहतकलुषास्ते मृगाक्षी(१)प्रियास्स्युः ॥

---

(१) दिव्याप्सरसां प्रियास्स्युरर्चिरादिमार्गे ।



## अथ पञ्चमशतके

### ९, नवमदशकम् ( मानेय्नोक्कुनल्लीर )

( श्रीभगवद्दर्शनाय श्रीसंवृद्धिपुरं गन्तुमिच्छया नायिका वचनं सखीः प्रति । )

१. मानेय्नोक्कुनल्लीर—

हे सख्यो मृगलोचनाः प्रियतमाः पापाऽस्म्यहं सन्ततं
व्योमव्यापकसत्फलक्रमुकतरुश्रीमल्लिकासौरभात् ।
(१) श्रीसंवृद्धिपुरं चकास्ति भरितं नित्यं मधुस्यन्दिभि-
र्वृक्षैस्तत्र हरेः पदाब्जयुगळं दास्यात्कदा प्राप्नुयाम् ॥

२. एय्कोल्तोलिमीर्काळ्—

हे सख्यो मम वारणात्किमिह वस्सिद्धं सुवर्णात्मकाः
पुन्नागा अपि माधवी च वकुळास्ते यत्र तत्सौरभैः ।
युक्तो दक्षिणमारुतस्तु परितो यत्रास्ति तत्र स्वयं
श्रीसंवृद्धिपुरेऽङ्घ्रिपङ्कजरजो विष्णोः कदा प्राप्नुमः ॥

३. कुडुमलर्क्कुळलीर—

हे सख्यः कुसुमार्द्रकेशभरिता विश्लेषदुःखार्दितां
मां वेदध्वनिरुच्चकैः प्रचलितो यत्र स्वयं कर्शयेत् ।
श्रीसंवृद्धिपुरे तु तत्र परितो होमादिधूमावृते
पादाब्जे मम नायकस्य कलये नित्यं कदाऽहं हरेः ॥

४. निषलुम् तोलिमीर्काळ्—

हे सख्यः किमिहाद्य मान्तु सततं खिन्नां निवार्य स्वयं
युष्माभिः क्रियते नवक्रमुकतरुश्रीनारिकेळादिभिः ।
संयुक्ते कदळीवनैश्च पनसैस्सौधोपरिच्छायया
श्रीसंवृद्धिपुरे तु शेषशयनो मां क्रीतवान् नायकः ॥

---

(१) इदं पुरं मलैयाळदेशे (तिरुवल्लवाळ्) इति प्रसिद्धम् ॥

५. नन्नलत्तोलिंमीर्कोछु—

हे सख्यो मम सुप्रियाः क्रतुततेर्धूमावळीभिर्नभो-
देशो यत्र विभाति संवृततमो नित्यं श्रमध्वंसिनि ।
श्रीसंवृद्धिपुरे तु तत्र रुचिरं दिव्यं फलं चेक्षुस-
त्सारं चापि घनं सुधारसमहो पश्यामि तेजः कदा ॥

६. काण्वदेल्नात्रु कोलो—

गायद्भृङ्गतरङ्गसङ्गविलसन्मन्दानिलोद्वीजितै-
र्वृक्षैर्नित्यमनोरमे बहुतमामत्युन्नतैश्शोभने ।
श्रीसंवृद्धिपुरे वटोर्मम हरेश्श्रीवामनस्याद्भुतं
पादाब्जद्वयमच्युतस्य तु कदा पश्यामि सख्यः कृशा ॥

७. पादङ्कळमेलणि—

कासारेषु समुद्रशोभिषु लसत्पाथोजनीलोत्पलै-
र्नारीणां वदनाक्षियुग्मसरणि र्यत्राभिभूता भवेत् ।
श्रीसंवृद्धिपुरे च तत्र जगतां नाथं हरिं रक्षकं
हे सख्यः किममी भजेम शरणं तत्पादपद्माश्रयाः ॥

८. नाळतोरुम् वीडिन्रिये—

सर्वत्रोच्चलितेक्षुकाण्डनिचयव्रीह्यादिसंशोभितैः
केदारै स्सरसीतटेषु भरिते दिव्ये महात्माश्रये ।
श्रीसंवृद्धिपुरे प्रभोः पदयुगं लोकाक्रमव्यापृतं
हे सख्यस्सततं भजेम किममी श्रान्ता वयं श्रीहरेः ॥

९. कळैक्कवैपूरिप्प—

शीतानोकहषण्डचारिमधुपश्रेणीरवैश्शोभने
श्रीसंवृद्धिपुरे तु वेणुनिनदैर्वीणारवैश्चक्रिणः ।
श्रीविष्णोः करुणा कदाऽतिशिथिलामास्माकहस्तावळी-
भूषां पूर्णतमां करोति सततं तत्पादसेवाभरात् ॥



१०. तोल्लरुळनल्विनैयाल्—

नित्यं चाप्युपकारकोऽस्त्ययमिति द्यावापृथिव्योरमुं
शंसन्त्येव हि तत्र दिव्यनगरे भक्तोत्तमास्सात्त्विकाः ।
साहस्रैः कृपया वसन्ति सततं श्रीभाग्यवृद्ध्याह्वये
दिष्ट्या तं तु भजेम नामशतकैस्सख्योऽद्य नारायणम् ॥

११. नामङ्कळायिरमुडैय—

नाथं नामसहस्रशोभितममुं पादाब्जभक्त्या स्वयं
स्तोतुं क्षेमकरश्शठारिरकरोत्साहस्रपद्यावळिम् ।
दिव्य श्रीकुरुकापुरप्रभुरसौ तत्राद्य धन्या विदु-
श्श्रीसंवृद्धिपुरं प्रतीह दशकं ये तेऽत्र जाता अपि ॥

———0———

## अथ पञ्चमशतके

### १०-दशमदशकम् ( पिरन्दवारुम् )

( अर्चावतारं विहाय विभवावतारगुणानुभवं कर्तुं मन-स्स्थैर्यं प्रार्थयते । )

१. पिरन्दवारुम्—

विष्णोर्जन्मचरित्रमत्र भुवि संवृद्धेः क्रमश्चाद्भुता
पञ्चभ्यो विजयप्रदानसरणिर्युद्धे च सा भारते ।
सर्वं मे हृदि सम्प्रविश्य सततं जीवं द्रवीकृत्य मे
भुङ्क्ते हन्त! कदा भजाम्युपगतं त्वां दिव्यतेजेनिधे ॥

२. वडुवै वार्तैयुळ्—

उद्वाहोक्तिमहो निशम्य वृषभध्वंसश्च ते श्रीहरे
मायाकेशिनिषूदनं च तरुणीसङ्गोऽपि रासे तव ।
नैवं ते चरितं तदेतदद इत्यप्यस्ति वाचोवशं
सर्वं मां शिथिलीकरोति जगतां मूलं कदा त्वां भजे ॥

३. पेय्युम् पूंकुलल्—

पुष्पालङ्कृतकेशपाशविलसन्मायास्तनापीतितं
स्ते बाल्ये चरितं च दुष्टशकटध्वंसोऽपि पादेन ते ।
आज्यादेरपि चौर्यभुक्तिसमये मातुश्च दण्डं करे
दृष्ट्वा तेऽक्षियुगं भयाश्रुभरितं मान्तु द्रवीकुर्वते ॥

४. कळलवेडत्तै क्कोण्डु पोय्—

धृत्वा कृत्रिमवेषमेव च पुरं तच्च प्रविश्य स्वयं
रुद्रस्य प्रबलासुरप्रमथनं तद्द्वारतस्तस्य च ।
ते देहे वसतिश्च सर्वविदिता गङ्गाधरस्याप्यहो
सर्वं ते चरितं प्रविश्य हृदयं मां च द्रुतं चाश्नुते ॥

५. इण्णवानवर्कोनुक्कु—

इन्द्रायेति च गोपवृद्धकलितं चान्नं स्वयं भुक्तवां-
स्त्वं वर्षाद्गिरिधारणेन कृतवान् गोगोपसंरक्षणम् ।
सृष्ट्वा भूमिमिमां स्वयं च सकलामश्नन् क्रमेणोद्गिर-
न्नाक्रम्योद्धृतवान् विवाहत इदं स्मृत्वा द्रुतं मे मनः ॥

६. निन्नवारुमिरुन्दवारुम्—

शक्याश्चिन्तयितुं च न स्थितिसमावेशोपवेशाश्च ते
रूपं नैकविधं तवेह सकलां मायां स्मरेयं तव ।
त्वां स्मर्तुं बत शक्नुयां कथमहं तेजोनिधे पापिन-
स्साधूपायमहो वदाद्य कृपया मे लोकसंरक्षक ॥

७. ओण्शुडरोडिरुळुमाय्—

चित्ते मेऽत्र विभासि नैव तु बहिस्ते रूपसन्दर्शनं
तेजो भाति तमोयुतं किमहह त्वं दृष्टिवश्यो न मे ।
त्वद्व्यापारमिहाखिलं हृदि कथं वेद्मि स्वयं हे प्रभो
रूपं ते कृपयाऽद्य दर्शय मम श्रीनीलरत्नप्रभ ॥



८. तिरुवुरुवु किडन्दवारुम्—

दिव्यं ते शयनं च नाभिकमलात् सृष्टं चतुर्वक्रम-
प्यन्तर्यामितया प्रविश्य सकलं सृष्ट्यादिकर्मापि ते ।
निस्सीमं तव नायकत्वसमं श्रुत्वा द्रवीभूय मे
चेतो हन्त ममाश्रुपूरसरणेर्मूलं हि कुर्यां किमु ॥

९. अडियै मूनै पिरन्दवारुम्—

भूमिं च त्रिपदां तवार्थितवतश्चित्रं चारित्रं न तत्
सर्वाम्भोधिधराद्युलोकसरणिं चाक्रम्य पद्भ्यां तव ।
प्राधान्यं च निरङ्कुशं तव हरेराकर्ण्य चेतो मम
श्रीशाद्य द्रवरूपतत्स्रवति वै पापी कदा त्वां भजे ॥

१०. कूडिनी रैक्कडैन्दवारुम्—

त्वं देवासुरसङ्गतोऽब्धिमथनं कृत्वा सुधां देवता
भोज्यमेव कथं विचित्रचरितस्तत्रासुरान् वञ्चयन् ।
आसीर्हन्त तदेतदद्य सकलं चित्तं प्रविश्यात्र मे
स्वात्मानं द्रवयत्यहो कथमहं त्वां शेषशायिन् भजे ॥

११. नाकणैमिशै नम्पिरान्—

अस्मन्नायकमेव नागशयनं तत्पादपद्माश्रयः
प्राप्तुं श्रीशठजित्सहस्रगणितां पद्यावळीं चाकरोत् ।
हृद्यां श्रीकुरुकापुरप्रभुरसावन्तादिरूपां मुनि-
स्तत्रेदं दशकं विचिन्त्य मनुजा वैकुण्ठसौख्याश्रयाः ॥

इति श्रीकल्किसिंहभगवद्भिरचितायां सहस्रगाधारत्नावळ्यां
पञ्चमशतकं सम्पूर्णम् ॥

---

## अथ षष्ठशतके

### १. प्रथमदशकम् ( वैकल्पूङ्कळिवाय् )

( श्रीशठारिरत्र श्रीमधुकृत्पुरेश्वरं प्रति पक्षिगणान् प्रेषयति अत्रापि नायिकावस्था । )

१. वैकल्पूङ्कळिवाय्—

यूयं हे (१)कुरुका उपेत्य सततं चाहारसम्मार्गणा-
स्सम्यग्व्रीहिसमृद्धसस्यनिचये श्रीचक्रपाणिं हरिम् ।
रम्ये (२)श्रीमधुकृत्पुरे मम विभुं दृष्ट्वा ममेमां दशां
पापिन्यास्तु मुहुः कृताञ्जलिपुटा आवेद्य धन्यास्स्थ भोः ॥

२. कादल्मैन् पेडैयोडु—

त्वं मे (३)श्यामल नारपक्षिवर ते कान्तामनु प्रेमतः
श्चाहारानुचर श्रुतिध्वनिमये यज्ञादिकोलाहलैः ।
रम्ये श्रीमधुकृत्पुरे मम विभुं श्रीशं जगद्रक्षकं
दृष्ट्वा साञ्जलिरङ्घ्रिपद्मयुगळे दीनां दशां मे वद ॥

३. तिरङ्कळोकियेङ्गम्—

यूयं पक्षिगणा उपेत्य परितः केदारसञ्चारिणो
रम्ये श्रीमधुकृत्पुरे मम विभुं श्रीचक्रपाणिं हरिम् ।
दृष्ट्वा तं परमं प्रणम्य कृपया बिम्बाधरं ब्रूत भो-
दीनाया मम दुर्दशां भृशमिमां विश्लेषदुःखात्मिकाम् ॥

---

(१) कुरुका इति पक्षिविशेषाः—द्रविडभाषायां 'कुरुकु' इति ख्याताः ।
(२) तिरुवण्वण्डूरिति मलैयाळदेशे प्रसिद्धं पुरम् ।
(३) कुरुनाराय् ।



४. इडरिल्पोकम् मूलिक—

भो भो हंसगणाः प्रियासहचराः कान्तं मम श्रीधरं
रम्ये श्रीमधुकृत्पुरे श्रुतिरवैस्सौम्ये वसन्तं हरिम् ।
दृष्ट्वाऽम्भोधिनिभं प्रभुं मम विभुं कृष्णं प्रियं ब्रूत तं
का चित्त्वद्विरहातुराऽतिशिथिला शोकद्रुतेत्येव माम् ॥

५. उणर्त्तल्ऊडलुणर्न्दु—

संश्लेषातिशयप्रियाः प्रियतमासक्ताश्च हंसाः प्रियं
रम्ये श्रीमधुकृत्पुरे मम विभुं दृष्ट्वा च कृत्वाञ्जलिम् ।
दिव्यश्रीतुलसीस्रगञ्चितशिरोमौळिं हरिं सादरं
स्तोत्रैर्युक्ततमैर्ममाप्यनुगुणैर्यूयं भृशं शंसत ॥

६. पोत्तियानिरन्देन्—

पुन्नागाश्रयिणस्तु यूयमधुना हे कोकिलाः स्वस्तिवः
किञ्चित्प्रार्थ्यमिदं मयाऽस्ति कदळीषण्डादिभिर्भूषिते ।
रम्ये श्रीमधुकृत्पुरे मम विभुं वीरं हरिं चक्रिणं
देवेशं त्ववलोक्य चानयत मे मोहान्तकं तद्वचः ॥

७. ओरुवण्णम् शेन्रु पुक्कु—

सौम्य श्रीशुक दिव्यसूनभरितैर्वृक्षस्स्वयं शोभिते
रम्ये श्रीमधुकृत्पुरे मम विभोश्श्यामं वपुः श्रीपतेः ।
वक्त्रं रक्तसरोजवच्च नयनं तत्पादपाणिं तथा
दृष्ट्वा शङ्खसुदर्शनौ तदुचितौ किञ्चिन्मदर्थे वद ॥

८. तिरुन्दक्कण्डेनक्कोन्र रैयाय्—

हे (१)पूवै द्विज दिव्यपुष्पभरितैः पुन्नागवृक्षादिभि-
श्चित्रे श्रीमधुकृत्पुरे मम विभोर्नेत्रे विशाले हरेः ।

---

(१) पूवै-इतिद्रविडभाषायां पक्षिविशेषनामधेयम् ।

दिव्यं तन्मकुटं चतुर्भुजगिरीन् नीलाम्बुदश्यामलं
दृष्ट्वा तं मम किञ्चिदुत्तरमिहानीयोपकारं कुरु ॥

९. अडिकळ्कैतोळुदु—

हं हंसाः कुसुमेशयाः प्रभुममुं कृष्णं हरिं मायिनं
दृष्ट्वा श्रीमधुकृत्पुरे भृशमुषश्शङ्खारवोद्घोषिते ।
श्रीशं तं विनयात्प्रणम्य नितरां पापाकुलां मां प्रति
ब्रूतोक्तिं कृपया तु यूयमुचितामेकान्तकाले हरेः ॥

१०. वेरुकोण्डुम्मै यानिरन्देन्—

यूयं भो मधुपास्सुगन्धभरिताः किञ्चित्तु याचे स्वयं
युष्मानेव विशेषतः सुविमले पम्पाजलोदक्तटे ।
रम्ये श्रीमधुकृत्पुरे मम विभुं दृष्ट्वा च रक्षःपुरी-
ध्वंसोत्साहिनमच्युतं वदत मां चैकामिमां जीविताम् ॥

११. मिन्कोळ्शेर्पुरिनूल्—

श्रीशं वामनमच्युतं सुविलसद्यज्ञोपवीताञ्चितं
भूयाच्चां प्रति वञ्चकं शठरिपुस्तत्पादपद्माश्रयः ।
स्तोतुं श्रीकुरुकापुरप्रभुरसौ साहस्रमाहात्र च
ज्ञात्वेदं मधुकृत्पुरानुदशकं धन्या दिवि स्युर्जनाः ॥





## अथ षष्ठशतके

### २. द्वितीयदशकम् ( मिन्निडै मडवार् )

( नायिकावस्था नायकस्य विलम्बात्प्रणयकोपेन नायिकया
तद्वारणमुच्यते ।)

१. मिन्निडै मडवार्—

अग्रं ते रमणी जनस्य तु तटिन्मध्यस्य च त्वत्प्रिय-
स्यैवं दुष्टविचेष्टितं तव कथं वच्मीति शङ्काऽस्ति मे ।
लङ्कावप्रविनाशकोऽसि भगवन् मायी भवान् वेद्यहं
चेष्टां ते किमतः फलं व्रज विभो दत्वा च मे कन्तुकम् ॥

२. पोकु नम्बियुन्तामरैपुरैकण्णिणैयुम्—

हे पूर्ण व्रज दूरतस्त्वमधुना ते नेत्रपद्मद्वयं
रम्यं स्मेरमुखं वयं न हि हरे धन्यास्स्वयं वीक्षितम् ।
प्रेयस्यस्तव सन्ति भाग्यभरितास्तापिञ्छकेश्योऽन्यत-
स्तासान्तु श्रुतिगोचरं पशुगणैस्त्वं वेणुनादं कुरु ॥

३. पोयिरुन्दु निन् पुळ्ळुवम्—

भो भोः कृत्रिमपूर्ण याहि वद ते वाचं हरे कृत्रिमां
त्वन्मायाद्यनभिज्ञसन्निधितले मे भाति सर्वं च ते ।
सौन्दर्यं प्रतिकूलमेव नयने बिम्बाधरे श्रीपते
विस्तीर्णाम्बुधिमन्थ सुन्दरभुजा नार्यः प्रियास्तेऽद्य काः ॥

४. आलिनीळिलै येळुलकुमुण्डु—

सुप्तस्त्वं वटपत्रके किल पुरा भुक्त्वा च लोकानिमान्
मायां ते न विदन्ति हन्त दिविषद्वर्गाश्च विद्मः कथम् ।
शक्तस्त्वं पशुघासने हि ललनालीलास्थले सैकते
किं वाग्भिस्तव कृत्रिमाभिरधुना सर्वं च विद्मो वयम् ॥

५. कळरेल्नम्बियुन् कैतवम्—

मिथ्यापूर्णं तवाप्तकृत्रिमवचो माऽस्त्वत्र तु श्रीहरे
चक्रिन् कैतवमस्ति सर्वविदितं ते भूतले वा दिवि ।
किञ्चिद्वच्मि तवाद्य तच्छृणु तव प्रेष्ठास्तरुण्यस्स्वयं
सन्तप्ता मधुभाषिताः किल ततो लीलां शुकैर्मे त्यज ॥

६. कुळकियेङ्गळकुळमणन् कोण्डु—

अस्माकं परिगृह्य पुत्थलिमिमां किं वाऽसि मुग्धोऽधुना
किं ते कार्यमितः पुरैव चरितं विद्मो वयं ते हरे ।
अस्माकं न किल क्षमार्हमिदमस्त्यास्ते तव प्रेयसी
गोष्ठी तेऽनुगुणा त्रिलोकमहिता माऽस्मानुपै हि स्वयम् ॥

७. कन्ममनेङ्गळकैयिल्—

अस्माकं करतोऽद्य पुत्थलिहृतिर्नैवोचिता ते हरे
भुक्त्वा वारिधिमग्नमेव च जगत्संरक्ष्य शुद्धोऽसि हि ।
दोषोऽयं किल दोष एव तव चाप्यस्मासु लीलां च ते
श्रुत्वा दण्डधरा भवन्ति करुणाहीना हि नस्सोदराः ॥

८. पिणक्कियावैयुम्—

सर्वां स्त्वं चिदचिद्गणानपि भृशं सम्मेळयन् भेदयन्
भासि ज्ञाननिधिश्च मूर्त उदितो भास्वानभिन्नस्स्वयम् ।
पूर्णः कीर्तिपयोनिधिः किल सखीवर्गैर्वयं चोदिता
लीलायामिह वारिताश्च भवता किं ब्रूयुरन्ये जनाः ॥

९. उकवैयाल्नेञ्जमुळ्ळुरुकि

प्रीत्याऽन्तर्हृदयं द्रवीकृतमिदं भूयात्कटाक्षैस्तव
श्रीपद्माक्ष वशीकृता वयममी भूयास्म चेति त्वया ।
अस्माकं हि विनाशितं सुरुचिरं लीलागृहं चौदनं
पादेनैव तवाद्य हन्त न हि तद्दृष्टं त्वया सस्मितम् ॥



१०. विनिल्लङ्गुमुडियिनाय्

भास्वद्दिव्यकिरीट ! भो ! परशुभृत् प्रध्वंसयन् दुर्नृपान्
प्रख्यातोऽसि यदेकविंशतिजयैः! पूर्वं जगत्सृष्टिकृत् ।
अद्य त्वं किल गोपवंशमखिलं चोज्जीवयन् भास्यहो!
नीलश्रीमणिवर्ण! तेऽद्य चरितैर्गोप्यो वयं कर्शिताः ॥

११. आय्चियाकियवन्नै—

गोप्यां तन्नवनीतचौर्यकथने सत्यां स्वयं मातरि
श्रीकृष्णं विलपन्तमेव च रुषा स्तोतुं शठारिर्मुनिः ।
साहस्रं कुरुकापुरप्रभुरसावाहोत्तमं द्राविडं
तत्रेदं दशकं शुभन्तु पठतां नैवास्त्यलभ्यं शुभम् ॥

---

## अथ षष्ठशतके

### ३. तृतीयदशकम् (नल्कुरुवुम् शेल्वुम्)

(अत्र शठारिः प्रणयकलहे सर्वेश्वरेण स्वाङ्गीकारप्रकार-
माह तिरुविण्णकर् (श्रीदिव्यपुरी) नायक-
परमिदं दशकम् ।

१. नल्कुरुवुम् शेल्वुम्—

श्रीसङ्कोचधनाढ्यते च नरकस्वर्गौ च वैशातिसौ-
हार्दे चापि विषामृते च सकलं भूत्वा स्वयं व्यापकः ।
स्वामी नः परमेश्वरो मम विभुर्यो भाति पश्यामि तं
श्रीसम्पूर्णकुलाश्रये तु नगरे श्रीदिव्यपुर्याह्वये ॥

२. कण्डविन्वम् तुन्बम्—

दृश्यं यत्सुखदुःखरूपमखिलं चिन्ताप्रशान्त्यात्मकं
शीतोष्णं च मिथोविरुद्धमपि यत्कोपप्रसादात्मकम् ।
तत्सर्वं स्वयमेव योऽस्ति भगवान् दृश्यो न चाक्ष्णोर्हरि-
स्तस्येदं नगरं शुभं मम विभोश्श्रीदिव्यपुर्योह्वयम् ॥

३. नगरमुम् नाडुकळुम्—

सर्वं यन्नगरात्मकं च सकलं ग्रामात्मकं यत्स्वयं
ज्ञानं मौढ्यमपि स्वयं निरवधि ज्योतिस्तथाऽन्धं तमः ।
भूलोकस्सुरलोक इत्यपि च यश्श्रीदिव्यपुर्यां विभु-
र्भाति श्रीहरिरस्य कीर्तिरतुला ! नान्यत्तु पुण्यं भवेत् ॥

४. पुण्णियम् पावम्—

पुण्यं पापमिदं च सङ्गविरहौ तत्तत्स्मृतिर्विस्मृति-
स्सत्यं चानृतरूपमेतदखिलं भूत्वाऽपि न स्यात्तथा ।
योऽसौ श्रीपतिरच्युतो मम विभुश्श्रीदिव्यपुर्यां हरिः
कृष्णस्यास्य कृपां भजध्वमतुलां! किं स्यादिदं कैतवम् ॥

५. कैतवम् शेम्मै—

कौटिल्यं च तथाऽऽर्जवं च सकलं नीलत्वधावल्यके
सत्यासत्यमयं च यौवन-जरे नूत्नं च जीर्णं च यत् ।
तत्सर्वं स्वयमेव यो मम विभुश्श्रीदिव्यपुर्यां हरि-
स्तस्योद्यानमिदं जगत्त्रयमहो! ब्रह्मादिदेवाश्रितम् ॥

६. मूवुलकङ्गळुमायच्चनाय्—

त्रैलोक्यं सकलं च यो न च तथा रागोऽपि वैरं स्वयं
लक्ष्मीश्चापि सरोजदिव्यभवना ज्येष्ठाऽप्यलक्ष्मीस्स्वयम् ।
स्तोत्रं निन्दनमप्ययं स्वयमहो? श्रीदिव्यपुर्यां हरि-
र्भाति श्रीपतिरच्युतोऽप्यघिनि मे ज्योतिः परं मानसे ॥



७. परं शुडरुडम्बाय्—

ज्योतिश्चापि परं स्वयं हि मलिनं चेदं जगद्भास्वरं
सर्वत्रापि च गुप्तमप्यचलमप्येवं हि मायात्मकम् ।
देवाद्यैरपि सेविते हि नगरे श्रीदिव्यपुर्याह्वये
भाति श्रीपतिरस्य पादयुगळं सेव्यं! न चान्यन्नृणाम् ॥

८. वन् शरण्णुरक्कीय्—

देवानां च शरण्यमप्रतिहतं! सर्वासुराणां रिपु-
र्हन्ता! चापि जगत्त्रयस्य शरणं सेव्यं न सेव्यं च यः ।
एवं दक्षिणदिक्प्रकाशि शरणं श्रीदिव्यपुर्यां हरिः
कृष्णो मे प्रभुरस्ति! मेऽस्ति शरणं नित्यं च सेव्यो मम ॥

९. एन्नप्पनेनक्काय्—

योऽसौ मेऽस्ति पिता च मेऽस्ति जननी धात्री च सौवर्णभा-
स्स्वामी रत्नमहोज्ज्वलस्स्वयमसौ मुक्तामयो मे प्रभुः ।
प्राकारैश्च हिरण्मयैर्विलसिते श्रीदिव्यपुर्याह्वये
सोऽयं मे नगरे स्वपादकमलच्छायां शरण्यामदात् ॥

१०. निळल्वेय्यिल्—

छायाऽपि श्रमहारिणी स हि हरिस्तापावहश्चातपो
योऽणुश्चापि महान् विभाति सपदि ह्रस्वोऽपि दीर्घोऽस्ति यः ।
एवं भाति चराचरं च न तथा! श्रीदिव्यपुर्यां हरिः !
प्राप्यं तत्पदयुग्ममेव शरणं! नान्यद्भवेत्पश्यत ॥

११. काण्मिन् कळुलकीर्—

लोकाः पश्यत चाद्भुतं तु तदिदं प्रत्यक्षमेवेति च
श्रीशं सर्वजगत्प्रमातृचरणं स्तोतुं शठारिर्मुनिः ।
साहस्रं कुरुकापुरप्रभुरसावाहाच्युताज्ञात्मकं!
ज्ञात्वा दिव्यपुरं प्रतीह दशकं स्युस्सूरिसेव्या नराः ॥

## अथ षष्ठशतके

४. चतुर्थदशकम् ( कुरवैयाच्चियरोडु )

( अत्र शठारिश्श्रीकृष्णस्य रासक्रीडादिवैभवमनुसन्धत्ते । )

१. कुरवैयाच्चियरोडु—

गोपीभिः किल रासगोष्ठ्यभिरतिर्गोवर्धनोद्धारणं
पूर्णाम्भस्यपि कालियस्य सरसि स्वाङ्घ्रिद्वयान्मर्दनम् ।
एवं सर्वविधं च नागशयनस्यात्यद्भुतं चेष्टितं
सञ्चिन्त्यैव दिवानिशं प्रमुदितोऽस्म्यत्यानवाप्तं न मे ॥

२. नेयत्तोङ्कुळैलदितुम्—

गीतं ह्यतमं तु वेणुमुखतो गायन् पशून् घासयन्
मुग्धाक्षीं कुसुमस्रगञ्चिततनुं नीळां समाश्लिष्य यः ।
मायाचेष्टितमद्भुतं व्यरचयत्तस्याद्य वृत्तं स्मरन्
मोदेऽहं द्रुतचित्त एव सततं! लोकस्समः को मम? ॥

३. निकरिल्मल्लरैचेत्तदुम्—

मल्लानामपि मर्दनं पशुगणैर्गत्वा च तद्घासनं
दीर्घोत्तुङ्गकरस्य चापि करिणस्सम्मर्दनं वैरिणः ।
एवं चेष्टितसन्ततिं च विविधां स्मृत्वा परज्योतिषः
सङ्कीर्त्यापि च नित्यमस्मि सुचिरं तुष्टो न मे स्याद्व्यथा ॥

४. नोववाच्चियुरलोडु—

बन्धप्राप्तिमुलूखलेऽस्य तु हरेर्भव्यत्वमप्यस्य तां
हन्तुं स्तन्यविषस्य पानमपि तन्मायात्मिकां पूतनाम् ।
मायाभृच्छकटस्य भञ्जनमपि श्रीकृष्णचेष्टावळिं
स्मृत्वा मे मन एवमेव सततं तुष्टं! किमीहेऽपरम् ॥



५. वेण्डित्तेवरिरक्कवन्दु पिरन्ददुम्—

देवैरर्थित एव जन्ममृदिह क्षीरार्णवादर्थितो
मात्रा यस्तमसि स्वयं यदविशद्दोपाङ्गणं श्रीहरिः ।
पुष्टस्तत्र हि गुप्त एव च रिपुं कंसं यथा चावधीत्
सर्वं कृत्रिमचेष्टितं तु तदिदं वच्मीह! किं मे भयम्? ॥

६. इकल्कोळ्पुळ्ळैप्पिळन्ददुम्—

युद्धे तस्य बकस्य दारणमपि! ख्यातं वृषध्वंसनं!
चोत्तुङ्गार्जुनवृक्षयुग्ममथनं त्रैविक्रमं चेष्टितम् ।
एवं कृत्रिमचेष्टितावळिमिमां नाथस्य मे श्रीहरे-
स्स्तोतुं हन्त! दिवानिशं किल कृती सोऽहं! न चिन्ताऽस्ति मे ॥

७. मनप्परिप्पोडळुक्कु—

जातो दुःखयुते च मानुषकुले नानातनूर्धारयन्
स्वेच्छातश्च रिपून् प्रहत्य नितरां कोपप्रशान्तिं वहन् ।
दिव्यश्रीतुलसीं किरीटकलितां माल्यं च धत्ते हरि-
र्वक्षस्यैनमहं स्मरामि सततं! कस्स्यात्समो मे भुवि ॥

८. नीणिलत्तोडु वान् वियप्प—

द्यावाभूमितलातिविस्मयकरं मायामयं योधनं
बाणस्यापि सहस्रबाहुमथनं भूमेश्च मानं तथा ।
श्रीमद्वामनरूपिणोऽपि च हरे र्नाथस्य मे चेष्टितं
सञ्चिन्त्यास्मि कृती हृदीह विविधं क्षोभो न मे मानसे ॥

९. कलक्कवेलकडल्—

सप्ताम्भोधिततिं च सप्त च गिरीन् लोकांश्च सप्त स्वयं
योऽतीत्यापि रथं नयन्नतितरां मायाक्रियां चाकरोत् ।
यश्चक्रं च बिभर्ति दक्षिणकरे वामे तु शङ्खं च तं
स्तोतुं श्यामलवर्णमस्मि हि कृती कस्स्यात्समो मे भुवि ॥

१०. मणिमिश्चैरुम्पारम्—

पृथ्वीभारविनाशनाय समरे तस्मिन् पुरा भारते
मायाचेष्टितमद्भुतं बहुविधं कृत्वा चमूनाशनम् ।
एवं यः कृतकृत्य एव च पुनर्धाम स्वकीयं ययौ
ज्योतिस्तं परमं प्रणम्य कृतिनः किं मेऽस्ति नाथोऽपरः ॥

११. नायकन् मुडुवेल्लुलकुक्कुमाय्—

सप्तानां जगतां च नायकमणिर्यं स्सप्तलोकीं स्वयं
भुक्त्वोद्गीर्य च तन्मयोऽपि न तथा तं केशवं श्रीपतिम् ।
स्तोतुं श्रीकुरुकापुरप्रभुरसौ दिव्यं शठारिर्जगौ
साहस्रं तदिदं करोति दशकं भक्ताननन्याश्रयान् ॥

---

## अथ षष्ठशतके

### ५. पञ्चमदशकम् ( तुवळिल्मामणिमाडम् )

( नायिकावस्थां प्राप्तश्शठारिरत्र वरधन्विमङ्गलपुर
(तोलैविल्लिमङ्गलम्)नायकविषयेऽति
प्रवणोऽस्तीति सखीभिर्मातृ
वर्गं प्रत्युक्तिः । )

१. तुवळिल्मामणिमाडम्—

ध्यायन्तीं वरधन्विमङ्गलपुरं श्रीरत्नसौधाश्रितं
तामेतां प्रति मुञ्चताद्य सकलामाशां जनन्योऽनघाः ।
सेयं कीर्तयतीह तस्य विमले श्रीशंखचक्रे हरे-
र्नेत्राम्भोजयुगं सबाष्पनयना स्थित्वा मुहुर्जल्पति ॥



२. कुमिरुमोशै विळवोलि—

यूयं श्रीवरधन्विमङ्गलपुरं प्रत्नं प्रविश्यानया
श्रीदिव्योत्सवघोषभूषितमिमां दिव्यामृतोक्तिं प्रति ।
आशावर्जितमानसास्स्त! यदियं भ्रान्ता च संस्मृत्य तं
देवानामधिदेवमेव सततं साश्रुर्द्रुताङ्गा स्वयम् ॥

३. करैकोळपैम्बोलिल्—

दिव्यश्रीवरधन्विमङ्गलपुरे नानातरूणां गणै-
र्यूयं तान्तु सरोवरैरपि वृते रम्ये च नीत्वा स्वयम् ।
श्लाघ्यश्रीशुभवाचमप्यहह! तां दूरे त्वकार्ष्टाद्य सा
बाष्पार्द्राऽब्धिशयं त्रिविक्रममपि स्मृत्वा च गोपालकम् ॥

४. निर्कुम् नान्मरैवाणर्वाळ्—

नित्यं वेदचतुष्टयं श्रितवतामावासभूतं शुभं
सेयं श्रीवरधन्विमङ्गलपुरं दृष्ट्वाऽद्य धाष्ट्यान्विता ।
यूयं पश्यत मातरस्सततमप्येषा स्मरन्ती मुदा
कृष्णं वारिधिवर्णमेव शिथिलं नैवाद्य वश्या भवेत् ॥

५. कुलैयुम् वाण्मुकत्तेलैयै—

नीत्वैतां वरधन्विमङ्गलपुरं दीप्राननां कोमलां
यूयं वारिजलोचनं त्वकुरुत प्रेक्षास्पदं चोज्ज्वलम् ।
सेयं तद्दिवसात्प्रभृत्यहह हा! बाष्पार्द्रनेत्रा भृशं
मोहान्धा हृदि दिव्यरूपनिरतां बद्धाञ्जलिस्तद्दिशे ॥

६. नोक्कुम् पक्कमेल्लाम्—

सर्वत्रापि किलेक्षुकाण्डसरणिं व्रीह्यादिपद्मावळीं
दृष्ट्वेयं वरधन्विमङ्गलपुरे श्रीताम्रपर्णीतटे ।
नान्यत्पश्यति कुत्र चिच्च सततं तस्यैव नामान्यहो
सङ्कीर्त्यास्ति मुदाऽन्विता मणिनिभाङ्गस्याद्य वै मातरः ॥

७. अन्नैमीरणिमामयिल्—

सेयं रम्यमयूरसुन्दरमृगी सौन्दर्यमौग्ध्यान्विता
नान्यच्छ्रीवरधन्विमङ्गलपुरं प्रत्नं विनाऽऽकर्णयेत् ।
वश्या नैव हि नः किमीदृशमहो भाग्यं पुरा चार्जितं
किं वा मायिचरित्रमेतदनिशं तच्चिह्ननामोक्तयः ॥

८. तिरुन्दु वेदमुम् वेळ्वियुम्—

वेदैर्यज्ञगणैश्श्रिया च भरितं श्रीताम्रपर्णीतटे
चोदीच्ये वरधन्विमङ्गलपुरं यस्मिन् दिने साऽभजत् ।
तत्कालात्प्रभृति स्वयं शिथिलितस्वाङ्गा विशालाम्बका
सङ्कीर्त्यास्त्यरविन्दलोचनमहो नित्यं द्रुतस्वाशया ॥

९. इरङ्गि नाळतोरुम् वाय्वेरीइ—

नित्यं साश्रुभरा हृदि भ्रमवशा वाचि स्वयं चापला-
ज्जल्पन्ती च तरूनपि द्रवयति ध्यात्वा मणीन्द्रप्रभम् ।
आहूयापि च केशिवक्त्रदळनस्यावासभूतं शुभं
सेयं श्रीवरधन्विमङ्गलपुरं सङ्कीर्त्य बद्धाञ्जलिः ॥

१०. पिन्नैकोल्निलमामकळ्कोल्तिरुमकळ्कोल्—

नीळा किं धरणी किमु स्वयमियं श्रीरेव वा जन्मतः
किं किं वाऽद्भुतमस्य मुग्धचरितं स्मृत्वाऽऽह्वयत्येव तम् ।
तद्वासं वरधन्विमङ्गलपुरं प्रत्नं च मूर्ध्ना नम-
न्त्येवेयं सततं च तत्पुरमहानामश्रुतिं चिन्तयेत् ॥

११. शिन्दैयालुम् शोल्लालुम्—

श्रीशं वाङ्मनसक्रियाभिरनिशं देवाधिदेवं हरिं
माता चापि पितेत्ययं शठरिपुस्स्तोतुं सहस्रं जगौ ।
मौनी श्रीवरधन्विमङ्गलपुरं प्रत्नं प्रतीदं शुभं
ज्ञात्वा तद्दशकं रमापतिपदाम्भोजाश्रयास्स्युर्जनाः ॥

---

**IV. H H Sri Yatiraja Swami of Melukote :—**

(श्री. उ. प. हं-यदुगिरि यतिराजस्वामिनः)—
श्रीमच्छठारिमुनिसूक्ति-सहस्रगाथा-
तात्पर्यवाहि-मृदुसंस्कृत-पद्यमाला ।
श्रीकल्किसिंहरचिता हृदयङ्गमेति
सम्पत्कुमार-मुनिरित्थमभिष्टवीति ॥

**V. Sri U. Mahamahopadhyaya Pandita-ratnam Lakshmipuram Srinivasacharya Swami (Mysore) :—**

" पुस्तकमुपलब्धमभिवीक्ष्य महान् प्रमोदस्सम्बभूव । ........ एवंरीत्या प्रपञ्चान्तर्यामिणो मुखोल्लासकरणमेव हि मानुष-जन्मनः परमं प्रयोजनम्। एतादृशप्रवृत्तौ भवन्तं प्रेरयिताऽन्तर्यामी स एवेति नैतच्चित्रम् ॥........इदमुत्तरोत्तरेणातिशयेन आनन्दमावहति ॥ "

**VI. Sri. U. Ubhaya-Vedanta-Vidvan P. B. Annangaracharya Swami (Conjeeveram)**

" सहस्रगाथारत्नावळीं परिशील्य परमानन्दतुन्दिला वयम् । अत्यद्भुतमिदं रचनम् । श्रीमतामवतारवैभवं सर्वैरत्र विद्वद्भिरैस्समस्वरमङ्गीकृतम् ॥ "

**VII. Sriman Praktana Vimarsa Vichakshana Rao Bahadur R. Narasimhachar Avl.** M.A., M. R. A. S. (Retired Director of Archæology in Mysore) :—

"The Sanskrit Stanzas run smoothly and bring out the meaning of the original as clearly as possible. The work bears testimony to the scholarship of the author and may be looked upon as a creditable performance."

---

॥ श्रीः ॥

अस्य समग्रप्रबन्धस्य (अद्य)अग्रिमं मौल्यम् रू. ३—८—०

प्रथमभागस्य ,, ,, २—०—०

[illegible]र्गज्ञगणैश्चि[illegible]

 प्रापणभृतिः पृथगेव देया.

प्राप्यस्थानम् —

[illegible]रम्-श्रीवेदान्त-पुस्तक-शाला म्यानेजर्

(१७—ईस्ट् पार्क् रोड्)



**SAHASRA-GADHA RATNAVALI**

BY H. H. SRI KALKI, G. I.

Price Rs. 4. Postage extra.

To subscribers in advance Rs. 3-8-0 till 31-5-30.

*Apply to:—*

**The Manager, the Vedanta Book Depot,**

17, East Park Road,

Malleswaram, Bangalore.